Reprinted from the Journal of the Bombay Branch, Royal Asiatic Society, N.S., Vol. 23, 1947.

# ALAMKĀRA-TILAKA OF BHĀNUDATTA

By G. V. Devasthali

(Communicated through H. D. Velankar)

The present text of the *Alamkāra-tilaka* of *Bhānudatta* is based on the three manuscripts that were available to me. The first (A) is the MS. from the Bhandarkar Oriental Research Institute, Poona ; the second (B) is from the Bombay Branch of the Royal Asiatic Society's Library, Bombay ; and the third (C) is from the Bhagvatsinghji Collection in the Library of the University of Bombay. Of these the first is only fragmentary; and breaks in the beginning of the fourth chapter. The third also is defective in several places. The second alone is quite complete without any break. A detailed account of these MSS. is given in the Introduction which is to follow later. I take this opportunity of recording my indebtedness to the authorities of the above-mentioned institutions for kindly lending me their MSS. and allowing me to use them for the preparation of this critical text. So far as I know, the work, at least a critical edition of it, is not published anywhere else.

॥ श्रीः ॥

## श्रीभानुदत्तविरचितं

## अलङ्कार-तिलकम्

### प्रथमः परिच्छेदः

सोऽयं मे[1] मुदमातनोतु भगवान् कोलावतारो हरिः
सिन्धोः क्लेशमपास्य यस्य दशनप्रान्ते स्थिताया भुवः ।
तारा हारति वारिदस्तिलकति स्वर्वाहिनी माल्यति
क्रीडादर्पणति क्षपापतिरहर्देव[2]श्च ताटङ्कति ।। १ ।।

उरःस्फुरदलङ्कारचमत्कारपटुश्रियः ।
तनोति तिलकं भाले भारत्या भानुसत्कविः ।। २ ।।

अथ रसा आत्मानः । तेषां शरीरं काव्यम् । तस्य गतिरीतिवृत्तिदोषतदभावगुणा[3]लङ्कारा इन्द्रियाणि । व्युत्पत्तयः प्राणाः । अभ्यासो मन इति ।

तत्राभिप्रेतार्थनिर्वाहकपदकदम्बकं शरीरम् । तददुष्टत्वेन ज्ञायमानं रसाधायकम् । न च दुष्टं काव्यमेव न भवतीति वाच्यम्[4] । असतो दोषविचारानु[5]दयात् । न हि गगनकमलस्य दुःसौरभादिकं विचार्यते । किञ्च—

तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन ।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ।।

इति दण्डिवचनात् प्रत्यक्षसिद्धमपलपितुमशक्यम्। न हि श्वित्रदुष्टशरीरं शरीरमेव न भवति। अदुष्टं च शरीरं निर्दोषसगुणसालङ्कृतिशब्दार्थयोः संघटनम्। तच्च लोकानां[6] यशसे भवति।

अदुष्टमपि त्रिधा उत्तममध्यमाधमभेदात्। उत्तमचमत्कारिव्यङ्ग्यमुत्तमम्, मध्यमचमत्कारिव्यङ्ग्यं मध्यमम्, अस्फुटचमत्कारिव्यङ्ग्यमधममिति केचित्। तन्न। ध्वनिविरहिणि शब्दार्थचमत्कारे रसोत्पत्तिदर्शनात्। तस्माद् गुणालङ्कारबहुलमुत्तमम्, अल्पतरगुणालङ्कारं मध्यमं, गुणालङ्काररहितमधमम्। ध्वनिमत्ता च गाम्भीर्यमिति व्यङ्ग्यस्यापि गुणत्वमेव।

तच्चतुर्विधं संस्कृतं प्राकृतमपभ्रंशो मिश्रकं चेति। गीर्वाणवाणी संस्कृतम्। सा च द्विविधा गद्यं पद्यं चेति। प्राकृतं त्रिविधं तद्भवं तत्समं देशी चेति। देशोद्भवा देशी। देशास्तु महाराष्ट्रसौरसेनगौडलाटमगधमैथिलादयः। तत्र महाराष्ट्रोद्भवा[7] सम्यक्। गोपादिगीरपभ्रंशः। सकलमिश्रणान्मिश्रकं नाटकादि।

अपादपदकदम्बकं गद्यम्। तच्च द्विविधमुत्कलिका पद्यगन्धि चेति। छन्दोनुकारिवर्णकलापरहितपदसमुदाय उत्कलिका। छन्दोनुकारिकतिपयवर्णकलापकलितपदसमुदायः पद्यगन्धि। तयोश्च रीतिवृत्तिपुरस्कारेण पञ्च भेदाः चूर्णकं ललितं निष्ठुरं खण्डकं चित्रकं चेति। चूर्णके आरभटी वृत्तिः वैदर्भी रीतिः। ललिते कैशिकी[8] वृत्तिः पाञ्चाली रीतिः। निष्ठुरे आरभटी वृत्तिः गौडी रीतिः। खण्डके सात्वती वृत्तिः वैदर्भी रीतिः। चित्रके रीतिवृत्तिसाङ्कर्यम्।

उत्कलिका यथा— जटापटलस्ख[9]लदमरतरङ्गिणीसीकरनिकरतारकितगगन[10]मण्डलम्।

पद्यगन्धि यथा— भजत भजत देवं [11]हिमकरकलाकान्तिचन्दनचयचर्चितकलेवरम्।

चूर्णकं यथा— प्रतिरूपकमिव सुधारसस्य प्रतिफलमिव द्राक्षाफलस्य प्रतिमानमिव माध्वीकस्य स्मितमस्या राधिकायाः।

ललितं यथा— दरहसितकिरणकल्लोलकिर्मीरितेन चपलचकोरचञ्चूपुटकुटिलेन लोचमाञ्चलेन राधिकाया लुण्ठितमिव मे मनः।

निष्ठुरं यथा—जरठकमठपृष्ठनिष्ठुरशार्ङ्गतुङ्गटङ्कारकम्पितप्रलयपयोवाह[12] विभ्रमं श्रये श्रीपतिम्।

खण्डकं यथा— किं वर्ण्यतामस्य रघुपतेराकारो निराकारो रागस्य हास उपहासो मिथ्याज्ञानस्य नेत्रं प्रतिनेत्रं धर्मस्य।

चित्रकमुन्नेयम्।

लघुगुरुपुरस्कारेण या वर्तते सा गतिः। शुद्धाश्च गतयस्तिस्रो द्रुता विलम्बिता मध्या चेति। बहुभिर्लघुभिर्द्रुता। अल्पैर्विलम्बिता। समैर्मध्या। मिश्रिता च द्विविधा द्विमिश्रिता त्रिमिश्रिता चेति। द्विमिश्रिताः षट् [13]द्रुतविलम्बिता द्रुतमध्या विलम्बितद्रुता मध्यविलम्बिता विलम्बितमध्या मध्यद्रुता चेति। त्रिमिश्रिता अपि षट् द्रुतविलम्बितमध्या द्रुतमध्यविलम्बिता विलम्बितद्रुतमध्या विलम्बितमध्यद्रुता मध्यद्रुतविलम्बिता मध्यविलम्बितद्रुता चेति। सकलगतिमिश्रिता गतिशबला सर्वलघुः सर्वगुरुश्चेत्यष्टादश गतयः। न च चतुर्मिश्रादयोऽपि भवेयुरिति वाच्यम्। गतिपौनरुक्त्यापत्तेः।

द्रुता यथा—जय कपटमीन तव तनुविकसत्कमलपटल[14]मिव प्रकटयति नक्षत्रनिवहविभ्रमम्।

विलम्बिता यथा— लङ्काभर्तुर्यशोहंसं संहर्तुं नालिकामालिकामिव सेतुमकार्षीः।

मध्या यथा— हरसि [15]हलधर हललेखिन्या वीर्यं लिखितुमिव कालिन्दीकल्लोलनिकरमषी-धारासारान्।

एवं द्विमिश्रितादय[16] ऊहनीयाः।

गतिशबला यथा—त्रिदशकुलकिरीटकोटिमणिमयूखमञ्जरीपिञ्जरीकृतचरणारविन्द जना[17]नन्द नित्यगुणग्राम नीलोत्पलदलश्याम श्रीराम किं नाम परिमितधिया वर्णनीयोऽसि।

एवं पद्येऽपि सर्वगतयो ज्ञातव्याः।

शब्दार्थौ काव्यं शब्दधर्मश्च रीतिः। [18]अतः प्रथमं रीतिरुच्यते। असमाससमासान्यतरमात्र-पुरस्कारेण या[19] प्रवर्तते सा रीतिः। न च वृत्तिदोषगुणेष्वतिव्याप्तिः। मात्रपदेन तेषां व्यावर्तनात्। रीतयश्च षट् वैदर्भी आवन्ती पाञ्चाली गौडी लाटी मागधी चेति। तत्रेषत्समासा वैदर्भीति केचित्। तन्न। समासविरहिण्यव्याप्तेः। किन्तु बहुसमासहीना वैदर्भी। असमासायामपि विशिष्टा-भावसत्त्वात्। सा च चतुर्विधा असमासा एकसमासा द्विसमासा सङ्कीर्णा चेति।

क्रमेणोदाहरणानि—

भुवा गेहे मयारण्ये रामस्त्यक्तस्त्वया पथि।
अथ मुद्रे पुरन्ध्रीणां[20] प्रत्ययं कः करिष्यति॥

स्तनयोरन्तरा व्योम किमासीदिति शङ्कया।
भ्रमन्ति तव भृङ्गाक्षि हारास्तारा इवाकुलाः॥

भवान्तरभिया कृष्ण भवन्तं भगवन् भजे।
सिन्धोः पयसि गम्भीरे सहिष्ये शयनं कुतः॥

लङ्कापतिर्यस्य धनुर्निनादमाकर्ण्य शङ्काशतमादधानः।
करेण मौर्वीशिथिलादरेण यज्ञोपवीतं मुहुराममर्श॥

चतुःपदसमासा आवन्ती। यथा—

गोविन्द लुभ्यन्नयनारविन्दमन्दाक्षमन्दाननशीतिरोचिः।
राधा स्फुरत्किंशुककुञ्जपालीमालीकरालीढकरा प्रतस्थे॥

पञ्चपदसमासा पाञ्चाली। यथा—

आविर्भवत्पुलकशालिकपोलपालिरिन्दीवरद्युतिगभीरशरीरकान्तिः।
दृष्टोदरस्फुरदपाङ्गतरङ्गदक्षो वक्षोलुठन्मणिमयूखचयो मुकुन्दः॥

पञ्चाधिकपद[21]समासा गौडी। यथा—

सन्ध्यानृत्यविलोलपन्नगपतिभ्राम्यत्फणा[22]मण्डल-
स्फूर्जद्[23]ध्वानविधूतदिग्गजप्रारब्धकोलाहलः।
अन्तर्घूर्णितनेत्रवह्निनिपतत्स्फारस्फुलिङ्गावलि-
ज्वालावर्तितसप्तसिन्धुसलिलस्तोमो हरः पातु वः॥

अनेकरीतिमिश्रा लाटी। यथा—

सप्ताम्भोनिधितीरहीरपटलालङ्कारिणीं मेदिनीं
दातुं विप्रकुलाय योजितवतः सङ्कल्पवाक्योद्यमम्।
नाभीनीररुहात् सरोरुहभुवा तत्कालमाविष्कृते
हस्ताम्भोरुहि भार्गवस्य किमपि व्रीडास्मितं पातु वः॥

आरब्धरीत्यनिर्वाहा[24] मागधी। यथा—

नो [25]सन्ध्या समुपास्यते यदि तदा लोकापवादाद् भयं
सा चेत् स्वीक्रियते भविष्यति रवौ राजन्यबीजे नतिः।
इत्थं चिन्तयतश्चिराद्भृगुपतेर्निश्वासकोष्णीकृतो
दृक्प्रा[26]न्तप्रतिबिम्बशोणसलिलः सन्ध्याञ्जलिः पातु वः॥

सा [27]च रीतिरनुप्रासमुखी यमकमुखी श्लेषमुखी चेति। गुणग्रन्थे तासामुदाहरणम्। इदं त्वत्र चिन्त्यम्। रीत्यनिर्वाहो रीत्यन्तरप्रवेशः। तस्मान्मागध्यपि लाटयेव जाता। अनेकरीतिमिश्रणात्। इति पञ्चैव रीतयः।

ननु कर्तृकर्मक्रिया[28]पदानां पृथग्भाव[29]दर्शनाद्वैदर्भीं विना सर्वत्र लाटयेव भवेदिति चेत्। सत्यम्। समासार्हपदानां समास उक्तः। तेषां प्राधान्यप्रतीतिनियमात्। अन्यथाविमृष्टविधेयांशदोषापत्तेः।

गौडी वैदर्भी पाञ्चालीति तिस्रो रीतय इति वामनः। अस्य मते बहुसमासा गौडीति।

अथ वृत्तयो निरूप्यन्ते। शब्देऽर्थे व्यासज्यवृत्तिर्वृत्तिः। [30]न चालङ्कारेऽतिव्याप्तिः। तस्य व्यासज्यवृत्तित्वाभावात्। शब्दनिष्ठस्य यमकादेरर्थावृत्तित्वम्। अर्थनिष्ठस्योपमादेः शब्दावृत्तित्वम्। न च माधुर्येऽश्लीलादिदोषे चातिव्याप्तिः। तत्रापि शब्दनिष्ठस्यार्थनिष्ठस्य च माधुर्यस्याश्लीलस्य च भिन्नभिन्नजातीयत्वात्।

तत्र कैशिकी आरभटी सात्वती भारती चेति चतस्रो वृत्तय इति प्राचीनाः। कैशिक्यारभटयोर्मध्यमभेदात् षड् वृत्तय इति कण्ठाभरणकारः।

सुकुमारार्थसन्दर्भा कैशिकी। प्रौढसन्दर्भा कोमलार्था मध्यमकैशिकी। अस्या धर्मो नर्म। तत्र भरतः—

शृङ्गाररसभूयिष्ठः प्रियाचित्तानुरञ्जकः।
अग्राम्यपरिहासस्तु नर्म स्यात् तत् त्रिधा मतम्॥

परिहासो वैदग्ध्यक्रीडितम्। तस्य नर्मस्फुञ्जो नर्मस्फोटो नर्मगर्भ इति त्रयो भेदाः। अयमुत्सर्गः। यूनोर्नवानु[31]रागनवदर्शननवसङ्गमजन्यसुखानुभवो नर्मस्फुञ्जः। यूनो युवत्या वा स्वार्थसिद्ध्यनुकूलप्रच्छादनव्यापारो नर्मस्फोटः। यूनोः कपटचेष्टया परस्परमनोनिरूपणं नर्मगर्भः।

कैशिकी यथा तातचरणानाम्—

प्रेरयन्ति हृदयं न लोचनं नर्तयन्ति मदनं न दुर्यशः।
वारयन्त्य[32]विनयं न सम्भ्रमं स्नेहसारशरणं कुलस्त्रियः॥

मध्यमकैशिकी यथा—

व्याकोशकोकनदशोककरः करोऽयं खेलच्चकोरमदचोरमिदं च चक्षुः ।
उद्भिन्न[१३]विद्रुमरहस्यधरोऽधरोऽयं तत्स्यादवश्यमपि [१४]वश्यमवश्यमस्याः ।।

अत्रावन्ती रीतिः ।

नर्म यथा—

निर्यान्त्याः सविधे न कापि विदधे वाचोऽपि वा चातुरी
लेभे वा न मुखाम्बुजे स्मितपरीहासो विकासोदयम् ।
चक्षुः किञ्चिदुदञ्चितं समभवद् विज्ञातमेतावता
चेतः प्रेमकुरङ्गशावकदृशः स्थालीपुलाकोपमम् ।।

नर्मस्फुञ्जो यथा—

अस्तं याति गभस्तिमालिनि तमोजालैर्जगत्यावृते
वेषं वामदृशो[१५] विधाय विशतो राधारहःप्राङ्गणम् ।
बाले का त्वमसीति वृद्धवनितावाग्भिर्भयं विन्दतो
गोविन्दस्य चुचु[१६]त्कृतिर्विद[१७]धतु श्रेयांसि भूयांसि नः ।।

ननु—

'शृङ्गाररसभूयिष्ठा ललिता कैशिकी मता ।
सौन्दर्यसौकुमार्याभ्यां रौद्रादावप्यसौ भवेत् ।।'

इति तत्रातिव्याप्तिरिति चेत् । सत्यम् । सौन्दर्यं शृङ्गारः सुकुमारः सन्दर्भः । तस्मादेतौ [१८]समुदितौ यत्र रौद्रे[१८] प्रविशतस्तत्परमिदम् । यथा रघुकाव्ये 'सपदि गतमनस्क' इत्यादि ।

प्रौढार्थसन्दर्भारभटी । कोमलसन्दर्भा प्रौढार्था मध्यमारभटी । अस्याश्चत्वारो धर्माः वस्तूत्थापनावपातसंस्फोटसंक्षिप्तयः । मायाद्युत्थापितं वस्तु वस्तूत्थापनम् । प्रवेश[१९]निर्गमविद्रवहेतुरवपातः । क्रुद्धसंरब्धयोरन्योन्यमाघातः संस्फोटः । महतः संग्रामस्या[२०]ल्पीयो निदानं संक्षिप्तिः ।

आरभटी यथा तातचरणानाम्—

भूभृन्मौलितटीषु दर्शितसमारम्भोऽयमम्भोधर-
स्त्वत्खङ्गः प्रतिपक्षपङ्कपटलं प्रक्षालयन् धारया ।
युद्ध[२१]क्रुद्धविरुद्धसिन्धुरदलद्गण्डस्थलप्रस्खलन्
मुक्ताभिः करकाभिराशु समरक्षोणीतले वर्षति ।।

मध्यमारभटी यथा—

तव भृगुपते प्रतापो दहनति[२२] पताकति व्योम ।
स्वर्णाचलः शरा[२३]वति कलशति देवः सरोजिनीकान्तः ।।

वस्तूत्थापनं यथा—

अत्रान्तरे विरहविह्वलचक्रवाकीं मायामयीं दशमुखो रजनीमकार्षीत् ।
श्रीराघवो भटकुलस्य विहस्य निद्राविद्रावणाय धनुषि ध्वनिमाततान ।।

कोमलप्रौढसन्दर्भा प्रौढार्था सात्वतीति[44] केचित्। तन्न।

'वीरे रौद्रेऽद्भुते शान्ते वृत्तिर्भवति सात्वती।'

इति भरत[45]वचनात् शान्तेऽति[46]व्याप्तेः। किन्तु कोमलप्रौढसन्दर्भा कोमलप्रौढयोरन्यतरार्था सात्वती। अस्याश्चत्वारो धर्माः संघातसंलापोत्थापनपरिवर्तका[47] इति। मन्त्रवित्तदैवपौरुषान्यतरकृतसेनाभेदः संघात्यः। परस्परो[48]क्तिः संलापः। युद्धाय प्रेरणमुत्थापनम्। प्रसक्तं[49]कार्यमपहाय कार्यान्तरकरणं परिवर्तः।

कठोरार्था यथा तातचरणानाम्—

देव त्वं पुरुषोत्तमोऽसि नियतं तत्रापि रामो भवान्
प्रस्थाने तव लज्जयैव[50] [नमति] व्यक्तं यतो[51] मेदिनी[52]।
द्राक्पूर्वाचलपश्चिमाचलकुचावावृण्वती प्रोच्च[53]लद्-
ढक्कारावचलत्पयोधिलहरीचेलाञ्चलैश्चञ्चलैः॥

प्रथमं वैदर्भी ततो गौडी।

कोमलार्था यथा—

चन्द्रश्चञ्चतु मन्मथो मदयतु क्रीडा[54]सरः स्फूर्जतु
स्वैरं स्वैरमुपैतु चन्दनवनीरन्ता वसन्तानिलः।
नारीणामिव किन्तु [55]कान्तविरह[56]व्याधिप्रकोपस्पृशा-
मस्माकं हरि[57]विप्रयुक्तमनसामायुः परं क्षीयते॥

आवन्तीवैदर्भ्योर्मिश्र[58]णम्।

संघात्यो यथा—

रामस्य पार्श्वं समुपाजगाम बिभीषणो भीषणबाहुवल्लिः।
इतः किमु स्यादिति जातशङ्का रुरोद लङ्का विहगच्छलेन[59]॥

कोमलप्रौढसन्दर्भा कोमलार्था [60]भारती। ननु[60]—

'भारतीयं भवेद्वृत्तिर्वीररौद्रा[61]द्भुताश्रया।'

इति लिखनाद्वीरेऽतिव्याप्तिरिति चेत्। सत्यम्। वीररसे यत्राङ्ग[62]तया हास्यादिप्रवेशस्तत्परमिदम्। धर्मनियमः[63] प्रौढार्थे कोमलार्थे चो[64]त्सर्गः। एषा च नाटके प्रधाना। अस्याश्चत्वारो धर्मा आमुखं प्रहसनं वीथी प्ररोचना चेति। आमुखं प्रस्तावना। हास्य[65]प्रमुखं प्रहसनम्। छलवाक्याधिकोक्तिप्रभृतयस्त्रयोदश वीथयः। कविनायकपरिषत्स्वरूपनिर्वचनं प्ररोचना।

भारती यथा—

पातिव्रत्यमिदं यदीच्छसि मया [66]साकं रणं स्वीकुरु
[67]स्वानं साधय चारुशङ्खशकले चक्रं चमत्कारय।
इत्थं स्वामिवचो निशम्य मधुपव्याधूतनीलोत्पल-
द्रोणीदक्षकटाक्षपातसुभगं लक्ष्याः स्मितं पातु वः॥

वैदर्भी गौडी च रीतिः। कोमलोऽर्थः।

प्रहसनं यथा—

भिक्षौ दिग्वाससो वासो[68] भिक्षितुं समुपागते ।
आसी[69]द्भर्गः स्मितज्योतिरुद्योतिमुखमण्डलः ।।

अनेकवृत्तिशबलम् । तद्यथा—

रामेण वारिनिधिबन्धनबन्धुरेण हेलाविभिन्नदशकन्धरकन्धरेण ।
रोमाञ्चितस्मितरुचि[70]स्नपिताधरेण सीतामुखे निदधिरे नयनान्तपाताः[71] ।।

प्रथमपदे सात्वती द्वितीयपदे आरभटी तृतीयपदे भारती चतुर्थपदे कैशिकी ।

इति श्रीभानुदत्त[72]विरचितेऽलङ्कारतिलके प्रथमः परिच्छेदः ।।

# द्वितीयः परिच्छेदः

अथ दोषा निरूप्यन्ते । रसानुभवप्रतिबन्धको दोषः । स च ज्ञायमान एव प्रतिबन्धकः । अज्ञाते तस्मिन् पद्यादौ रसोत्पत्तिदर्शनात् । स्वरूप[1]तस्तस्य प्रतिबन्धकत्वे रसभ्रमानुदयापत्तेः । स च त्रिविधः । पदनिष्ठो वाक्यनिष्ठोऽर्थनिष्ठश्च । न च यमकादावसदर्थदोषेऽ[2]व्याप्तिः अर्थदोषे सत्यपि [3]पदनिष्ठरसोत्पत्तिदर्शनादिति वाच्यम् । तन्निष्ठदोषस्य तन्निष्ठरसोत्पत्तिप्रतिबन्धकत्वात् । अन्यथातिप्रसङ्गात् ।

तत्र पददोषाः । तत्र कण्ठाभरणकारः—

असाधु चाप्रयुक्तं च कष्टं चानर्थकं च यत् ।
अन्यार्थकमपुष्टार्थमसदर्थं तथैव च ।।
अप्रतीतमथ क्लिष्टं गूढं नेयार्थमेव च ।
संदिग्धं च विरुद्धं च प्रोक्तं यच्चाप्रयोजकम् ।।
देश्यं ग्राम्यमिति स्पष्टा दोषाः स्युः पदसंस्थिताः ।।

काव्यप्रकाशका[4]रमते अवा[5]चकानुचितार्थाविमृष्टविधेयांशा अधिक[6]दोषाः ।

अनुशासनाननुमतमसाधु । न चास[7]मर्थादौ 'जलं जलधरे क्षार'मित्यादावतिव्याप्तिः । तत्र पदस्य साधुत्वात् । ननु 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यादावतिव्याप्तिरिति चेत् । सत्यम् । तदसाध्वेव । किन्तु तद् वाक्यगतमिदं पदगतमिति विवेकः[8] । यथा[9]— 'गच्छध्वं कच्छमम्बुधेः' [10]इति । अस्या[11]नुकरणे दोषाभावः ।

सिद्धमपि कविभिरसंचारितमप्रयुक्तम् । न चासाधावतिव्याप्तिः । सिद्धपदेन तद्व्यावर्तनात् । न चाश्लीलेऽतिव्याप्तिः । रसविशेषे तस्यापि प्रयुक्तत्वात् । ननु कवयः कतिपये यावन्तो वा । आद्ये सर्वत्रा[12]प्रसिद्धिः[13] । द्वितीये तदवगन्तुमशक्यं भाविकवीनामननुभवादिति चेत् । न । कविभिः पूर्वसत्कविभिरि[14]त्युक्तत्वात् । यथा—

तत् सत्यं ते[15] वचन्ति यत् ।

वचेरन्तिपरस्य कवीनामनभिधानात्। कविभिर्न निबद्धमित्ययोग्यमेव तत्पदं जातमिति नास्ति। किन्त्वन्वयबोधविघटनद्वारा। तथा[१६]च व्युत्पन्नसदसि न दोष इति।

श्रुतिकष्टकरं कष्टम्। श्रुतीत्युपलक्षणम्। रसनाकट्वप्यवगन्तव्यम्। [१७]सजातीयाक्षरयोरेकत्र समावेशो रसनाकटु। यथा—

स्मर रन्तासि योषि[१८]ताम्।

श्रुतिकटु यथा—

दिक्षु दिक्षु क्षिपत्यक्षि पक्ष्मलाक्षी प्रति[१९]क्षणम्। इति।

रौद्रेऽ[२०]स्य गुणत्वम्।

[२१]पादमात्रपूरकमनर्थकम्। यथा—

स एव हि [२२]महेश्वरः।

यमकादावस्य दोषाभावः।

रूढि[२३]च्युत[२४]मन्यार्थकम्। यथा—

त[२५]न्मुखं केसरि स्फीतम्।

केसरिशब्दः सिंहे [२६]रूढः। केसरः किञ्जल्कमस्यास्तीति पद्ममभिहितम्। [२७]असमर्थेऽतिव्याप्तिश्चिन्त्या। [२८]प्रहेलिकायां गुणः।

तुच्छार्थमपुष्टार्थम्। यथा—

सिन्धुनन्दननन्दनः।

बुध एतावति वक्तव्ये एतावान्प्रयासः[२९]। क्लिष्टेऽतिव्याप्तिश्चिन्त्या। [३०]अस्य च्छन्दोऽनुरोधे दोषाभावः। यथा—

दशपूर्वमुखो हतः।

सस[३१]म्यगर्थः समर्थः। कष्टेन द्वितीयो[३२]ऽर्थो यत्र तदभिधानेऽसमर्थम्। न च प्रसिद्धि[३३]हतेऽतिव्याप्तिः तत्र द्वयमपि समर्थम्। किन्तु[३४] प्रसिद्धमेकमितरद[३५]प्रसिद्धमिति भेदः। यथा—

ललङ्घे नीरदं हरिः।

अस्य प्रहेलिकायां गुणत्वम्।

शास्त्रमात्रप्रसिद्धमप्रतीतम्। यथा—

बभार पारिमाण्डल्यमिव पाणौ हरिर्गिरिम्।

अस्य[३६] शास्त्रवित्सभायां दोषाभावः।

दूरार्थप्रत्यायकं क्लिष्टम्। यथा[३७]—

नगरिपुसुतसुतरिपुसदृशस्त्वम्।

[३८]नगरिपुरिन्द्रस्तत्सुतोऽर्जुनस्तत्सुतो घटोत्कचस्तदरिः कर्ण इति दूरादवगम्यते। प्रसिद्धे[३९] न दोषः।

[४०]पयोधरक्ष्माधरयोर्मृगीदृशस्त्वगिन्द्रियग्राह्यगुणः कदा भवेत्।

अप्रसिद्धार्थं गूढम् यथा—

हरिरुत्प्लुत्य गच्छति।

हरिशब्दो वाचकोऽपि[४१] मण्डूकेऽप्रसिद्धः। अस्यापि कारण[४२]प्राप्तौ बद्धे[४३]काव्ये दोषाभावः।

स्वसङ्केतितमसङ्केतितं वा नेयार्थम्। यथा—

माध्वीकं द्वेष्टि पङ्क्तिकृत्।

माध्वी[44]कं मधुनामानं दैत्यं पङ्क्तिकृद्दशावतारो हरिः। प्रहेलिकायामस्य दोषाभावः। यथा वा—

तडिद्दासी त्वया कृता।

अधमत्वेन[45] लक्षणम्। व्यङ्ग्यालङ्कारे गुणः।

अर्थसन्देहकरं सन्दिग्धम्[46]। यथा—

मया संवीक्षितो हरिः।

तृतीयायां मा[47]शब्दास्मच्छब्दप्रयोगसन्देहः। प्रकरणे निश्चायके दोषाभावः।

निश्चितं सद्विरुद्धार्थस्मारकं विरु[48]द्धम्। स[49]न्दिग्धेऽतिव्याप्तिवारणाय निश्चितपदम्। इदं विशेषणगतं विशेष्यगतं समासगतम[50]समासगतम्। क्रमेणोदाहरणानि—

प्रियस्य पुलकश्रेणी कान्ताप्रीतिविसूचिका।

यमस्ते हृदि वर्तते।

संयम इति वाच्यम्। [51]अत्रापूर्वमस्य[52] स्मरणम्।

द्विजैस्तव गृहे ह्यमद्य भक्ष्यं विधीयते।

श्लेषालङ्कारे दोषाभावः।

अदीपकमप्रयोजकम्। यथा[53]—

रामः श्यामः समाययौ।

जात्य[54]भिप्राये दोषाभावः।

देशसङ्केतितं देश्यम्। यथा—

वेदं[55] विना द्विजो रण्डः।

रण्ड इति पामरे [56]मैथिलसङ्केतितम्[57]। महाकविप्रयोगे दोषाभावः।

ग्राम्यं त्रिधा अश्लीलममङ्गलं घृणाकरं चेति। अश्लीलमपि त्रिधा अश्लीलार्थमश्लीलार्थान्तरमश्लीलस्मृतिकरं[58] चेति। त्रितयमपि यथा—

गृह्यतां मे कुरङ्गाक्षि कृपाणी लोहितानना।  
योनिरोधस्त्वयारब्ध आयुधं तव साधनम्॥

[59]अमङ्गलमपि त्रिधा। त्रितयमपि यथा—

निशि निद्रास्तु ते दीर्घा विहितामरयातना[60]।  
हारावाप्तिरभूत् कण्ठे।

एवं घृणाकरमपि त्रिधोदाहरणीयम्। अश्लीलं च संस्कृताश्लीलं देशाश्लीलं च। तत्र देशाश्लीलं देश एव दूषणम्। यथा—

ववुरित्थं समीरणाः।

एवमन्यदु[61]दाहरणीयम्। कवि[62]संगृहीतेषूपस्थभगवद्भगिनीप्रभृतिषु दोषाभावः[63]।

वचेरन्तिपरस्य कवीनामनभिधानात्। कविभिर्न निबद्धमित्ययोग्यमेव तत्पदं जातमिति नास्ति। किन्त्वन्वयबोधविघटनद्वारा। तथा[15]च व्युत्पन्नसदसि न दोष इति।

श्रुतिकष्टकरं कष्टम्। श्रुतीत्युपलक्षणम्। रसनाकट्वप्यवगन्तव्यम्। [17]सजातीयाक्षरयोरेकत्र समावेशो रसनाकटु। यथा—

स्मर रन्तासि योषि[18]ताम्।

श्रुतिकटु यथा—

दिक्षु दिक्षु क्षिपत्यक्षि पक्ष्मलाक्षी प्रति[19]क्षणम्। इति।

रौद्रेऽ[20]स्य गुणत्वम्।

[21]पादमात्रपूरकमनर्थकम्। यथा—

स एव हि [22]महेश्वरः।

यमकादावस्य दोषाभावः।

रूढि[23]च्युत[24]मन्यार्थकम्। यथा—

त[25]न्मुखं केसरि स्फीतम्।

केसरिशब्दः सिंहे [26]रूढः। केसरः किञ्जल्कमस्यास्तीति पद्ममभिहितम्। [27]असमर्थेऽतिव्याप्तिश्चिन्त्या। [28]प्रहेलिकायां गुणः।

तुच्छार्थमपुष्टार्थम्। यथा—

सिन्धुनन्दननन्दनः।

बुध एतावति वक्तव्ये एतावान्प्रयासः[29]। क्लिष्टेऽतिव्याप्तिश्चिन्त्या। [30]अस्य च्छन्दोऽनुरोधे दोषाभावः। यथा—

दशपूर्वमुखो हतः।

सस[31]म्यगर्थः समर्थः। कष्टेन द्वितीयो[32]ऽर्थो यत्र तदभिधानेऽसमर्थम्। न च प्रसिद्धि[33]हतेऽतिव्याप्तिः तत्र द्वयमपि समर्थम्। किन्तु[34] प्रसिद्धमेकमितरद[35]प्रसिद्धमिति भेदः। यथा—

ललङ्घे नीरदं हरिः।

अस्य प्रहेलिकायां गुणत्वम्।

शास्त्रमात्रप्रसिद्धमप्रतीतम्। यथा—

बभार पारिमाण्डल्यमिव पाणौ हरिर्गिरिम्।

अस्य[36] शास्त्रवित्सभायां दोषाभावः।

दूरार्थप्रत्यायकं क्लिष्टम्। यथा[37]—

नगरिपुसुतसुतरिपुसदृशस्त्वम्।

[38]नगरिपुरिन्द्रस्तत्सुतोऽर्जुनस्तत्सुतो घटोत्कचस्तदरिः कर्ण इति दूरादवगम्यते। प्रसिद्धे[39] न दोषः।

[40]पयोधरक्ष्माधरयोर्मृगीदृशस्त्वगिन्द्रियग्राह्यगुणः कदा भवेत्।

अप्रसिद्धार्थं गूढम् यथा—

हरिरुत्प्लुत्य गच्छति।

हरिशब्दो वाचकोऽपि[41] मण्डूकेऽप्रसिद्धः। अस्यापि कारण[42]प्राप्तौ बद्धे[43]काव्ये दोषाभावः।

स्वसङ्केतितमसङ्केतितं वा नेयार्थम्। यथा—

माध्वीकं द्वेष्टि पङ्क्तिकृत्।

माध्वी[४४]कं मधुनामानं दैत्यं पङ्क्तिकृद्दशावतारो हरिः। प्रहेलिकायामस्य दोषाभावः। यथा वा—

तडिद्दासी त्वया कृता।

अधमत्वेन[४५] लक्षणम्। व्यङ्ग्यालङ्कारे गुणः।

अर्थसन्देहकरं सन्दिग्धम्[४६]। यथा—

मया संवीक्षितो हरिः।

तृतीयायां मा[४७]शब्दास्मच्छब्दप्रयोगसन्देहः। प्रकरणे निश्चायके दोषाभावः।

निश्चितं सद्विरुद्धार्थस्मारकं विरु[४८]द्धम्। स[४९]न्दिग्धेऽतिव्याप्तिवारणाय निश्चितपदम्। इदं विशेषणगतं विशेष्यगतं समासगतम[५०]समासगतम्। क्रमेणोदाहरणानि—

प्रियस्य पुलकश्रेणी कान्ताप्रीतिविसूचिका।

यमस्ते हृदि वर्तते।

संयम इति वाच्यम्। [५१]अत्रापूर्वमस्य[५२] स्मरणम्।

द्विजैस्तव गृहे ह्यमद्य भक्ष्यं विधीयते।

श्लेषालङ्कारे दोषाभावः।

अदीपकमप्रयोजकम्। यथा[५३]—

रामः श्यामः समाययौ।

जात्य[५४]भिप्राये दोषाभावः।

देशसङ्केतितं देश्यम्। यथा—

वेदं[५५] विना द्विजो रण्डः।

रण्ड इति पामरे [५६]मैथिलसङ्केतितम्[५७]। महाकविप्रयोगे दोषाभावः।

ग्राम्यं त्रिधा अश्लीलममङ्गलं घृणाकरं चेति। अश्लीलमपि त्रिधा अश्लीलार्थमश्लीलार्थान्तरमश्लीलस्मृतिकरं[५८] चेति। त्रितयमपि यथा—

गृह्यतां मे कुरङ्गाक्षि कृपाणी लोहितानना।
योनिरोधस्त्वयारब्ध आयुधं तव साधनम्॥

[५९]अमङ्गलमपि त्रिधा। त्रितयमपि यथा—

निशि निद्रास्तु ते दीर्घा विहितामरयातना[६०]।
हारावाप्तिरभूत् कण्ठे।

एवं घृणाकरमपि त्रिधोदाहरणीयम्। अश्लीलं च संस्कृताश्लीलं देशाश्लीलं च। तत्र देशाश्लीलं देश एव दूषणम्। यथा—

ववुरित्थं समीरणाः।

एवमन्यदु[६१]दाहरणीयम्। कवि[६२]संगृहीतेषूपस्थभगवद्भगिनीप्रभृतिषु दोषाभावः[६३]।

रस[64]विपरीता रीतिररीतिः। यथा—

रामो जघान बाणेन।

वृत्त्यनुरुद्धायां रीतौ दोषाभावः।

रिङ्गत्येष रणाङ्गणे।

अत्र मध्यमारभटी वृत्तिः[65] वैदर्भी रीतिः।

योगरूढयोरप्रतिपादकमवाचकम्। यथा—

तव चक्रस्य गर्जितम्।

गर्जितं मेघनादे शक्तम्। तत्तु[66] गर्जितमवाचकं न भवति। परन्तु चक्रस्येति वाक्यदूषण[67]मिदमिति चिन्त्यम्। यथा—

पांसुभिर्वासरो निशा।

निशापदेन तमोमयत्वमुक्तम्। तन्न तद्वाचकम्। अस्य समाधौ गुणत्वम्। यथा—

नरसिंहस्य स[68] कोऽपि कण्ठगर्जः।

अनर्हार्थमनुचितार्थम्। न च विरुद्धेऽतिव्याप्तिः। विपरीतप्रतीति विरुद्धम्[69]। अधमत्वप्रतीतिरनुचितार्थमिति भेदात्। यथा—

राघवो रतिपतिः प्रतीयते।

रत्याः पतिरित्यपि[70] प्रतीयमानोऽर्थः। निन्दायामस्य दोषाभावः[71]। यथा[72]—

कुटिलस्तव कुन्तलः।

विधेयां[73]शस्य[74]-प्राधान्येनाप्रतीतिरविमृष्टविधेयांशम्। अस्य यद्यप्यन्वयबोध[75]विरोधित्वं नास्ति तथापि विलम्बितान्वय[76]बोधजनकत्वेन दूषणत्वम्। यथा—

द्वितीयमूर्तिर्मधुसूदनस्य।

प्रसिद्धावस्य न दोषत्वम्। यथा—

मुख[77]चन्द्रो विराजते।

निष्ठुरसन्धिवदस्यापि वाक्य[78]दोषत्वम्। अदुष्टस्यैव पदस्यान्यसमाहारेण दुष्टत्वात्। न[79] चात्र समासनियमस्तत्र तस्यानियम इति वाच्यम्। समास[80]स्थले दोषस्या[81]परिहार्यत्वादिति चिन्त्यम्।

अथ वाक्यदोषाः। तत्र कण्ठाभरणकारः—

शब्दहीनं क्रमभ्रष्टं विसन्धि पुनरुक्तिमत्।
व्याकीर्णं वाक्यसङ्कीर्णमपदं वाक्यगर्भितम्॥
द्वे भिन्नलिङ्गवचने द्वे च न्यूनाधिकोपमे।
भग्नच्छन्दवती च द्वे चाशरीरमरीतिमत्॥
वाक्ये[82] ह्येते महादोषाः षोडशैव प्रकीर्तिताः॥

काव्यप्रकाशकारमते च उपहतविसर्गलुप्तविसर्ग[83]पतत्प्रकर्षसमाप्तपुनरात्ताभवन्मतयोगार्धा[84]न्तरैकवाचकानभिहित[85]वाच्या[86]स्थानपदसमासप्रसिद्धिहतभग्नप्रक्रमन्यून[87]पदाधिकपदा[88]मतपरार्थानि दूषणा[89]न्यतिरिक्तानि[90]।

इतरपदा[९१]प्रयोगः शब्दहीनम्। यथा—

रामो रथेनाध्वनि संचचार।

चर[९२]तेस्तु[९३] तृतीयायोगादात्मनेपदम्। विवक्षातो दोषाभावः।

क्रमभ्रष्टं द्विविधम्। विपर्यासच्युतभेदात्। उभयमपि[९३] यथा—

पयोधराधरौ बिम्बहेमाम्बुजसहोदरौ[९४]।

चक्षुर्मुखं मुखं[९५] तस्याः सखे मदनदैवतम्॥

सम्बन्धविज्ञानावेगविरहोन्मादादावदोषः। यथा[९६]—

सत्त्वं रजस्तमः पुंसामिति सन्ति त्रयो गुणाः।

अन्त्यो मध्यः परत्रास्ति प्रथमस्त्वयि राघव[९७]॥

विसन्धि द्विविधं निष्ठुरसन्धि विगतसन्धि च। उभयमपि यथा—

[९८]गिर्यार्यिर्यायिनं हित्वा पद्मा एष्यति मे गृहम्।

प्रथमस्य रौद्रे द्वितीयस्य प्रगृह्यादौ न दोषः। यथा—

चन्द्रार्कौ ककुभः केलिस्खलिते कुण्डले[९९] इव।

समानजातीयार्थं पुनरुक्तम्। यथा—

भीमो भीमोऽर्जुनोऽर्जुनः।

लाटानुप्रासे गुणः। यथा—

चन्द्रं[१००] चन्द्रानने पश्य।

मिथो विभक्ती[१०१]नामसांनिध्यं व्याकीर्णम्। यथा—

[१०२]सुप्तो हरिर्गतम्।

बोधाविरोधिपदान्तरिते दोषा[१०३]भावः। यथा—

हरः स्म तत्र स्मितमातनोति।

महावाक्ये[१०४]नानुरुद्धेन वाक्यान्तरेणान्तरितं वाक्यगर्भितम्। न च व्याकीर्णेऽतिव्याप्तिः। तस्य महावाक्यानुरोधित्वात्। यथा[१०५]—

एह्येहि कोऽधिको मत्तो मामनुस्मर राधिके।

प्रश्नोत्तरे न दोषः।

भिन्नलिङ्गवचने यथा—

समुद्र इव कौशल्या रत्नानीव रघूद्वहः।

अनुद्वेगे चादोषः।

रत्नं दारा गृहे यस्य।

न्यूनाधिकोपमाने यथा—न्यूनं च द्विविधं हीनोपमानं हीनविशेषणोपमानं च। अधिकमपि द्विविधमधिकोपमानमधिकविशेषणोपमानं च। हीनाधिकोपमाने[१०६] यथा—

[१०७]खद्योत इव तिग्मांशुः खद्योतस्तिग्मभानु[१०८]वत्।

महतो निन्दायां हीनोपमा हीन[१०९]स्तुतावधिकोपमा च न दोषः[११०]। यथा—

भार्गवस्य प्रतापाग्रे भास्वान् खद्योतपोतवत्।
काककोकिलवत् क्रोडे क्रीडसि त्वं महीरुहः ॥

न्यूनाधिक[१११]विशेषणोपमाने यथा—

चरच्चकोरशीतांशुरिव राधे तवाननम्।
लतेव राजते बाहुः क्वणत्कनककङ्कणः ॥

प्रसिद्धौ न दोषः।

मदनकर[११२]तालनर्तितमधुकर इव चक्षुरेणाक्ष्याः।
मृगनाभिबिन्दुसुन्दरमाननमिन्दूपमं तस्याः ॥

नयने चापलं चन्द्रे कलङ्क इति प्रसिद्धम्।

छन्दोयतिभङ्गौ स्पष्टौ[११३]। [११४]एत्यग्रे इत्यनुशासनात् प्रादि[११५]पूर्वस्य वा पादान्त इति पादान्तस्य [११६]लघोर्यतिभङ्गस्य स्वरसन्धौ न दोषः। क्रमेणोदाहरणानि यथा—

सीमन्ते सिन्दूरं तव दूरात् प्रेक्ष्य पञ्चेषुः।
तरणेरस्य तलोदरि ग्रहणं राहोर्वितर्कयति ॥
अयि शशिमुखि गच्छत्यध्वनि श्रीमुरारिः।

अत्राष्टमस्थाने यतिभङ्गः स्वरसन्धिकृतो न दोषाय।

क्रियाहीनमशरीरम्। क्रियेत्युपलक्षणम्। कर्मकर्तृहीनगप्यवगन्तव्यम्। यथा—

रामं राजीवलोचनम्।

स्फुटं प्रतीयमानायां क्रियायां[११७] न दोषः। यथा[११८]—

हृदयं त्वयि राघवे।

अत्रास्तीति स्फुटं[११९] प्रतीयमाना[१२०] क्रिया।

शैथिल्यमरीतिः। सौकुमार्यकाठिन्यराहित्यं शैथिल्यम्। यथा—

ललना ललितालापकोमला लोललोचना।

गौड्यां गुणः।

विसर्गस्त्रिविधः। अविकृतो विकृतः पुष्टश्च। अविकृतो लुप्तविसर्गः। विकृत उपहतः। पुष्टः स्पष्टः। त्रितयमपि यथा—

'उत चन्द्र उत पुरन्दर उत नल' इत्यादि।

कर्णो हतो नलो नीलो जनो दीनो जडो नृपः[१२१]।
मन्दश्चन्द्रः शरः[१२२] क्रूरः कायः क्षामः स्मरः खलः ॥

प्रथमस्य क्रमे न दोषः[१२३]। द्वितीयतृतीययोः कतिपयवर्णान्तरितयोर्न दोषः। यथा—

रामः क्षामकलेवरः स्मरशरज्वालातुरः पातु नः ॥
बालो व्यालोललीलोत्पल[१२४]दलनयनो गोपवेषोऽद्य दृष्टः ॥

पतत्प्रकर्षो[125] यथा—

जय दामोदर दानवदारण दीर्घदुःखदलनोदयदक्ष।
दुर्निरूप दुर्दर्श दुरत्यय विरचय करुणामीश[126] नमस्ते ॥

त्रिपादयमकादौ न दोषः।

कर्मकर्तृक्रियाभिः परिसमाप्तस्य वाक्यस्य पुनरुपादानं समाप्तपुनरात्तम्। यथा—

पातु त्वां पुण्डरीकाक्षो दानवक्षोभवर्धनः।

आकाङ्क्षाविघटनद्वारा चास्य दोषत्वम्। तथा च यत्राकाङ्क्षा तादृशि[127] तदर्थे[128] हेतुविशेषणे वा न दोषः। तदर्थं [129]यथा—

नमस्तस्मै महेशाय भवसन्तापशान्तये।

हेतुविशेषणं[130] यथा—

अद्यापि सखि नायातः कृष्णः कुलिशमानसः।

अभिमतयोगव्यतिरेकोऽनभिमतयोगः। स चासमासगतः[131] समासगतः प्रकरणगतश्च। असमाससमासगतौ[132] यथा—

दृक्पातैः पातिता येन त्रिदशास्तीव्रतेजसः[133]।
[134]अहो शाखामृग[स्त]स्य भुजाशाखासु खेलति ॥

तीव्रतेजसा[135] इति कृते[136]ऽभिमतयोगो भवति।

[137]व्यासस्य मुखमादर्शो भवभूतिर्विभूषणम्।
रसना कालिदासस्य भारतीरङ्गवेदिका ॥

भारत्या, रङ्गवेदिका[138] इति कृते सकलयोगो भवति। अध्याहारे दोषाभावः।

अर्धान्तरे द्वितीयार्धे एकस्य पूर्ववाक्यान्वयिनो हेत्वा[139]देरप्रधानस्य वाचकमर्धान्तरैकवाचकम्। एवमर्धान्तरे [140]प्रथमार्धे एकस्योत्तर[141]वाक्यान्वयिनो हेत्वादेर्वाचक[142]मर्धान्तरैकवाचकमवगन्तव्यम्। पादेऽपि अर्धेऽपि पदविपर्यासाद् व्याकीर्णम्। अर्धान्तरैकवाचकस्य चैकार्धे परार्धान्वयिन एव हेत्वादेर्वाचकत्वमिति ततो[143] भेदः।

अङ्गे कुरङ्गाक्षि निधेहि भूषाम्
द्राक्षारसे क्षाररसो न युक्तः।
तदित्थमाकर्णय मद्वचांसि
सुधा विशुद्धेव सतां हिताय[144] ॥

तद्धेतोर्निधेहि भूषामित्यन्वयः। तदुत्तरार्धे पतितम्।

वाच्यमनभिहितमनभिहितवाच्यम्। वाच्यमभिप्रेतम्। तच्च क्वचिन्मुख्यम्। क्वचिदपि तु-हि-प्रभृतयः। यथा—

ताताङ्घ्रिभक्तियुक्तेन तथापि[145] पितुराज्ञया।
राज्यं त्यक्तं श्रितं कुञ्जमनुल्लङ्घ्यं गुरोर्वचः ॥

ताताङ्घ्रिभक्तियुक्तोऽस्मीति [146]कर्तुं युज्यते श्रितं[147] चेति। चरमपादे[148] हेत्वर्थं[149]श्चाभिधातुमुचितः।

[150]असमाजे पतितमस्थानपतितम्। यथा—

न राजा येन वीक्षितः।

न वीक्षित इति युज्यते। यथा वा—

सखि क्रूरे तमःपूरे नालोकि यदुनन्दनः।
गत्वापि[151] यमुनाकुञ्जमञ्जनाचलदीधितिः॥

अञ्जनाचलदीधितिरिति [152]यद्यदुनन्दनविशेषणं तत्समाज[153]च्युतम्। व्याकीर्णेऽतिव्याप्तिश्चिन्त्या।

अस्थानपदसमासं यथा—

चक्षुः कुवलयक्रोडक्रीडोद्भृङ्गजयो[154]द्यतम्।

मध्यमकैशिक्यां मध्यमारभटयां च[155] न दोषः।

प्रसिद्धिहतं च यथा—

गर्जत्येष फणीश्वरः।

समाधौ न दोषः।

भग्नारम्भो भग्नप्रक्रमः। न च पतत्प्रकर्षेऽतिव्याप्तिः। तत्र च प्रकर्षभङ्गोऽत्र चारम्भभङ्ग इति भेदात्। स च पञ्चविधः प्रकृतिप्रत्ययपर्यायसर्वनामोपसर्गभेदात्। प्रकृतिप्रक्रमभङ्गो यथा—

स्मृतो हैमवतीनाथो लक्ष्मीनाथोऽपि चिन्तितः।

पुनरपि स्मृत इति युज्यते। प्रत्ययप्रक्रमभङ्गो यथा—

गच्छन्कच्छं प्रियां प्रेक्ष्य रोमाञ्चन्वर्तते हरिः।

पश्यन्निति युज्यते। पर्यायप्रक्रमभङ्गो यथा—

[156]शोणः करः कुरङ्गाक्षि रक्तस्तेऽधरपल्लवः।

पुनरपि शोण इति युज्यते। सर्वनामप्रक्रमभङ्गो यथा[156]—

[157]हरेरस्य कथां तस्य चिन्तनं न क्षणं त्यज॥

पुनरस्येति युज्यते। उपसर्गप्रक्रमभङ्गो यथा[157]—

अनुस्मर स्मराराति विचिन्तय विषं जगत्॥

पुनरन्विति युज्यते।

ननु प्रत्ययादीनां पुनरभिधाने कथितपददोषापत्तिरिति चेत्। न। धर्मिधर्मोभयनिष्ठं कथितपदं धर्ममात्रनिष्ठं भग्नप्रक्रममिति भेदात्। वस्तुतस्तु [158]द्वितीयस्थाने क्रमभङ्गो न दोषाय। प्रथम एव क्रमो न भवति। किन्तु प्रथममारम्भः। पुनस्तत्करणे क्रमः। तेन तृतीयस्थाने यदि भङ्गस्तदा प्रक्रमभङ्ग इत्यभिधीयते। चित्रे न दोषः।

[159]न्यूनं यथा—

किं किमित्याकुलः शिवः।

किं किमित्युक्तमुद्देश्यं च नोक्तम्। नवोढासम्भ्रमादिवाक्ये न दोषः। [160]यथा—

किं किमाकुलमभाषताङ्गना।

अधिकपदं यथा—

कलावान् कैरवद्युतिः।

चन्द्रस्य श्वैत्यं प्रसिद्धमेव[161]। अस्याप्यर्थविशेषे प्रकर्षजातौ च न दोषः। यथा—

आश्रौषं हयहेषितम्।

हयसांनिध्यमर्थविशेषः। द्वितीयं यथा—

अभिनवबिसकाण्ड[162]च्छेदगौरः सुधांशुः।

अत्र कान्तिविशेषः प्रतिपाद्यः। तृतीयं स्फुटम्।

अमतः परो द्वितीयार्थो यत्र तदमतपरार्थम्। इदं च श्लेष एव। तथा च विरु[163]द्धार्थयोः श्लेषोऽपि न कर्तव्यः। यथा—

वारिदं[164] विगत[165]जीवनं शरत् कासहासरुचिरा व्यलोकयत्।

अत्र[166] करुणहासौ श्लेषेण प्रतिपादितौ। तौ च विरुद्धौ। अङ्गाङ्गितया यदि भासते तदा न दोषः। कष्टालङ्कारः कष्टरसश्चो[167]हनीयः।

यद्यप्यसाधुनिरर्थकाप्रयुक्तनिष्ठुरसन्धिभग्नच्छन्दोयत्यरीत्युपसर्गपतत्प्रकर्षव्यतिरिक्तस्थलेऽर्थदोषं विना पदवाक्ययोर्दोषो नास्ति तथापि सम्प्रदायानुरोधा[168]दतिरिक्तास्ते निरू[169]प्यन्ते। तत्र कण्ठाभरणकारः-

अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम्।
खिन्नं चैवातिमात्रं च परुषं विरसं तथा॥
[170]हीनोपमं भवेच्चान्यदधिकोपममेव च।
अप्रसिद्धोपमं चान्यदसदृक्षोपमं[171] तथा॥
निरलङ्कारमश्लीलं विरुद्धमिति[172] षोडश॥

काव्यप्रकाशकारमते अपुष्टं व्याहृतं निर्हेतु अनवीकृतं[173] नियमपरिवृत्तमनियमपरिवृत्तं विशेषपरिवृत्तमविशेषपरिवृत्तं साकाङ्क्षमपदयुक्तं सहचर[174]भिन्नं विध्ययुक्त[175]मनुवादायुक्तं त्यक्तपुनःस्वीकृतं चेति दूषणान्यतिरिक्तानि।

वाक्यैकवाक्य[176]तानापन्नमपार्थम्। यथा—

कुरङ्गोऽस्ति विहङ्गोऽस्ति भृङ्गोऽस्ति किमतस्ततः।

उन्मत्तबालाद्युक्तौ न दोषः। [177]यथा—

कश्चन्द्रः क्व गतासि सुन्दरि कुतो गच्छामि पश्य प्रिये।

व्यर्थं यथा—

आगतं प्रेक्ष्य राघवम्।

अनागतस्य दर्शनाभावादागतमिति विशेषणं व्यर्थम्। कामिनीनां दीर्घ[१७८]तरभावोक्तौ शान्तानां धर्मोपदेशे च न दोषः। यथा[१७९]—

उदितं पश्य शीतांशुम्।

एकार्थं यथा—

गच्छत्यस्तं चरमजलधिं गाहते शीतरोचिः।

गच्छति गाहते च द्वाभ्यां सन्ध्यासमय एवोक्तः। अर्थपुनरुक्तमत्रैवान्तर्भवति। यथा—

रविरुष्णः पुनातु नः।

रसावेशे मूर्खव्युत्पादने च न दोषः।

अद्य विश्वमिदं निःस्वं रत्न[१८०]मुक्तमिदं जगत्।

ससंशयं यथा—

बुधो [१८१]मित्रगृहं गतः॥

विदग्धोक्तौ तरुणयोः प्रच्छादनोक्तौ च न दोषः। यथा—

देहि वासस्थलं भूरि यदद्य रसदुर्दिनम्।

अपक्रमं यथा—

द्विजेभ्यो दक्षिणां दत्त्वा देवो यज्ञमुपाचरत्।

चित्रोक्तौ न दोषः। यथा—

नाभिकुण्डे स्मरो होता होमाग्निं स्थापयिष्यति।
रोमालिच्छद्मना पूर्वमुत्थिता धूमधोरणी॥

रीत्याद्यनिर्वाहः खिन्नम्। इदं शब्ददूषणं भवितुमर्हति। अनुद्वेगे [१८२]न क्वचिद्दूषणम्।

निष्ठा कान्ता मतिर्दीपः तपः केलिनिकेतनम्।
विद्या मालेव कण्ठस्य भाति[१८३] भाग्यं मनीषिणः॥

इवादान[१८४]मुद्वेगकरम्।

असम्भवार्थमतिमात्रम्।

मधुवन्यमयं जगत्।

विनयोक्तावत्युक्तावलङ्कारे च न दोषः। प्रत्येकं यथा—

कुलमद्य प्रदीपो मे त्वयि सद्य[१८५] समागते।
मेरुः सर्षपवद्य[१८६]स्य खुरक्रोडे निलीयते॥

अनुचितार्थं [१८७]परुषम्। यथा—

आयाहि तल्पमेणाक्षि मातस्त्वं मुञ्च मे गृहम्॥

उपदेशे रौद्रे च न दोषः। उभयमपि यथा—

कालव्यालमुखे तिष्ठ न तिष्ठ नृपसद्मनि॥
दुष्टश्चेत् कौरवः क्रूरो गुरुरद्य गुरुर्न मे॥

[१८८]विरुद्धरसं विरसम्। ननु विरसो रसदूषणमिति चेत्। सत्यम्। अर्थदोषोऽपि भवतीत्यर्थदोषावसरे चोक्तम्।

[१८९]आलिङ्ग मां प्रिये तातं मृतं किम[१९०]नुशोचसि।

शोकशृङ्गारावेकत्रानुचितौ। अङ्गाङ्गिभावापन्नयोरदूषणम्। यथा—

पुरो भूमिभुवः स्मेरवदनो मदनो[१९१]पमः।
दशास्य[१९२]ममुमादर्शं दर्शयामास राघवः॥

अत्र बीभत्सोऽ[१९३]ङ्गम्।

हीनाधिकोपमयोरनुद्वेगे श्लेषे चादूषणम्। प्रथमं पूर्वमुदाहृतम्।

द्वितीयं यथा—

पुरुषोत्तम एवासि[१९४] राजन् किमभिधीयताम्।

अप्रसिद्धोपमं यथा—

दन्ता गुञ्जाफलोपमाः।

अनुद्वेगे चादूषणम्। यथा—

तव चेतोऽम्बुधिस्तत्र सुखं स्वपिति माधवः।

असदृशोपमं यथा—

कृष्णः पीताम्बरो राधा[१९५]धरो धाराधरोपमः।

व्यतिरेकोपमायां न दूषणम्। यथा—

सर्वथा नोपकुर्वन्ति दुर्जनाः सुजना इव।

अलङ्कारमात्रराहित्यं निरलङ्कारम्। अलङ्कारोऽर्थालङ्कारः। मात्रपदं खिन्नेऽतिव्याप्तिवारणाय यथा—

माधवो वीक्षितो युधि।

रसपुष्टावदोषः। यथा—

मदग्रे कः पुरन्दरः।

अत्र रौद्ररसः पुष्टः।

अश्लीलं यथा—

अनङ्गायतनं पश्य [१९६]यदि स्वर्गसुखस्पृहा।

अस्य पूर्ववत् सर्वा व्यवस्था।

विरुद्धं यथा—

प्रकाशितलोकसमयदेशप्रसिद्धिसम्प्रदाययुक्त्यौचित्यप्रतिज्ञाधर्मार्थकामसङ्गीतशास्त्राणां विरोधादस्य त्रयोदश भेदाः। [१९७]प्रकाशितविरुद्धं यथा—

गुणैर्बध्नासि कोदण्डं दूरं ते न शरो गतः।

[१९८]धनुर्बद्धमिति प्रकाशितं शरः पलायित इति विरुद्धम्। विरोधालङ्कारे न दूषणम्। यथा—

बद्धः कामिनि कुन्तलस्तव पुनर्मध्यः परिक्षीयते।

लोकविरुद्धं[199] यथा—

वाजी वहति बृंहितम् ।

बालप्रबोधोक्तौ न दोषः । समयविरुद्धं यथा—

[200]केलिकोकिलनिक्वाणकोमलाः सकला दिशः ।

अनयोरेकत्र समयो विरुद्धः । चित्रोक्तावुत्पाते च न दोषः । यथा—

अहो विकसति व्यक्तं नक्तं सुदति सारसम् ।

देशविरुद्धं यथा—

कालिन्द्याः पुलिनं तुङ्गैर्दिङ्मातङ्गैर्निषेव्यते ।

पौरुषवर्णने न दोषः । यथा—

सोऽयं लङ्केश्वरो यस्य चन्द्रार्कौ पार्श्वचारिणौ ।

चन्द्रार्कयोर्नभो देशः । प्रसिद्धिविरुद्धं यथा—

चक्रे चक्रायुधं स्मरः ।

उत्प्रेक्षायाम[201]दूषणम् । यथा—

कामः कलावतीक्रोधादिन्दुचक्रं[202] करे दधौ ।

सम्प्रदायविरुद्धं यथा—

पतिः कपीनामयमम्बुराशिमिन्दुच्छविं बिन्दुमिवाललङ्घे ।

अब्धिः श्याम इति कवीनां सम्प्रदायः । विस्मये न दोषः ।

[203]शुभ्रीकृतो भवत्कीर्त्या करी क्वाणेन लक्ष्यते ।

युक्तिविरुद्धं यथा—

गेहे गेहे विधूदयः ।

असम्भावितोपमायामदूषणम् ।

मुधा सर्पे नृपे दया[204] ।

प्रतीतिविरुद्धं यथा—

धन्या पुरी यतिर्यत्र क्रोडे कान्तां न मुञ्चति ।

हास्यरसे न दोषः । औचितीविरुद्धं यथा—

भिल्लस्य सुखयत्यङ्गं चारुचामरमारुतः ।

देवताप्रसादादौ न दोषः । यथा—

तरङ्गतरलीभवत्कुवलयत्विषा चक्षुषा
तुषारगिरिकन्यके यमधमं जनं पश्यसि ।
पयोधरमहीधरे नटति तस्य वामभ्रुवां
रणत्कनकिङ्किणीकलरवेण देवः स्मरः ॥

एवमन्यान्यपि विरुद्धानि ज्ञातव्यानि ।

अपुष्टं यथा—

विधुर्गगनसङ्गतः।

इतिहासे जात्यादौ न दोषः।

व्याहतं यथा—

किमनया कलया रजनी[205]पतेर्नयनयोर्मम सैव विधोः कला।

किमनयेति व्याहृत्य पुनः कलाया [206]एव स्तुतिः कृता[206]। समानजातीययोरेकत्र प्रकर्षे क्वचिददूषणम्। यथा—

संनिधिस्तव वक्त्रेन्दोरिन्दोः किं मे प्रयोजनम्।

अनवीकृतो[207] यथा—

अलं चित्रैरलं वित्तैः श्रीरामो यदि न स्तुतः।

पुनर्व्यर्थमिति [208]युज्यते। अत्रेदं चिन्त्यम्। अलं कृत्वा पुनरलं चेदन[209]वीकृतो दोषः। [210]पदान्तरकरणे च पर्यायभङ्गः। तेन कवीनामुभयतःपाशः। किञ्चेदमपि शब्दपुनरुक्तम्।

नियम[211]परिवृत्तं यथा—

सूर्यवंशो गृहं तत्र दीप एव रघूद्वहः।

एवकारेणान्ययोगव्यवच्छेदो लभ्यते। तदनुद्देश्यम्। [211]उद्देश्यतायामदोषः। इदमपि व्यर्थमेव दूषणम्। शब्द[213]दूषणत्वात्।

अविशेषपरिवृत्तं यथा—

गौरीकुरु कुरङ्गाक्षि हारं हसितरोचिषा।

श्वेतस्य श्वेतकरणं न विशेषाय। अतिशयविशेषे वाच्ये न दोषः। यथा—

रदस्तव स्मित[214]स्निग्धः क्षीरक्षालितमौक्तिकम्।

साकाङ्क्षं यथा— येन विना यस्य न स्वार्थानुभावकत्वं तस्य [215]साकाङ्क्षा।

प्रहरत्येष राघवः।

विपक्षमित्याकाङ्क्षति। विरहोन्मादे नवोढाभिलापे च न दोषः। इदमपि शब्ददूषणम्। आकाङ्क्षायोग्यतासत्तीनां शब्द[216]निष्ठत्वात्।

अनादेयपदयुक्तमपदयुक्तम्।

भवने धरणी मुक्ता विमुक्ता तरुणी वने।<br>
रामोऽहमिति जीवामि सर्वं दुष्कर्मणां फलम्॥

तृतीयपद एव पर्यवसन्नम्। चतुर्थपदमनादेयम्। हेतू[217]पन्यासे न दोषः।

हेतुहीनं निर्हेतु यथा—

तीरे नीरनिधेरिन्दुः प्रायश्चित्तमिवाचरत्।

प्रायश्चित्ते [218]हेतुर्नोक्तः। प्रसिद्धौ न दोषः।

त्यक्ता रामेण मैथिली।

जनापवादः प्रसिद्धो हेतुः[219]।

सहचरभिन्नं[२२०] यथा—

अग्रतो ब्राह्मणः काको दक्षिणे शकुनः स्मृतः ।

अनयोः साहचर्यं विरुद्धम्[२२१] । अप्रधानीभूते सहार्थे न दोषः । यथा—

रामो जगाम सङ्ग्रामप्राङ्गणं कपिभिः सह ।

अप्रधानीभूते सहार्थे[२२२]त्यनुशासनम् ।

पर्याप्तस्य वाक्यस्य पुनरुपादानं त्यक्तपुनःस्वीकृतम् । यथा—

अस्ति स्वस्तिकरः कृष्णः सोऽपि शीतांशुशेखरः ।

[२२३]सोऽपीत्यनेन पर्याप्तस्य पुनरुपादानम् । साकाङ्क्षे न दोषः । [२२४]तस्य दोषत्वे दीपकस्य गुणत्वमावृत्तेरलङ्कारत्वं न स्यात् । अपि तु चतुर्भिः स्वीकृता[२२५]व्यतिरिक्तस्यैव स्वीकारादिति चिन्त्यम् ।

विध्यर्थायुक्तं विध्ययुक्तम् । यथा—

तवाद्य शरवारितः समिति रावणो धावति ।

शरेण[२२६] वार्यता[२२६]मिति विध्यर्थो युज्यते । निष्ठान्त उक्तः ।

अनुवादायुक्तो यथा—

उग्र पालय मेदिनीम् ।

उग्र इत्यनुवादो रक्षणेऽयुक्तः । नामाभिधाने न दोषः । यथा—

भीम संरक्ष मामितः ।

अयुक्तं विरुद्धाभ्यन्तर एव भवतीति विचार्यम् ।

अयोगसापेक्षासत्संसर्गासमर्थरूपकापुष्टविशेषणासङ्गतयश्च परे दोषाः ।

योगरूढौ योगानन्वयोऽयोगः । यथा—

मनो विनोदयन्त्येते स्वर्णदीपङ्कजानिलाः ।

स्वर्णद्यां पङ्का[२२७]भावात्पङ्कजस्य योगोऽनुपपन्नः ।

सापेक्षं यथा—

ह्रस्वं मध्यस्थलं तव ।

मृणालादेरवधेरपेक्षा[२२८] ह्रस्वस्येति ।

असमीचीनस्यार्थस्य संसर्गोऽसत्संसर्गः । यथा—

युद्धे भङ्गो भवति भवतो वैरिभूमीपतीनाम् ।

भवत इति पदस्य भङ्गसांनिध्यम् । न च विरुद्धमतिकृदेवायम् । तस्य समासा[२२९]समासविषयकत्वादिति ।

असमर्थरूपकं यथा—

मुखपद्मं तमो हन्ति ।

तमोहनना[२३०]ननुकूलं पद्मरूपकम् ।

वाच्या[211]ननुकूलमपुष्टविशेषणम्। यथा—

यशस्तमीपतिद्युति।

सुधा[212]पतिद्युति इति पुष्टो[213]ऽर्थः। तत्करणे श्यामत्वप्रवेशः।

असङ्गतिः सङ्गत्यभावः। स च ग्रन्थादौ।

इति श्री[214]भानुदत्तविरचितेऽलङ्कारतिलके दोषतद[215]भावनिरूपणं नाम द्वितीयः परिच्छेदः॥

## तृतीयः परिच्छेदः

अथ गुणाः। तत्र कण्ठाभरणकारः—

[1]श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिस्तथा कान्तिरुदारत्वमुदात्तता॥
ओजस्तथान्यदौर्जित्यं प्रेयानथ सुशब्दता।
तद्वत् समाधिः सौक्ष्म्यं च[1] गाम्भीर्यमथ विस्तरः॥
संक्षेपः संमितत्वं च भाविकत्वं गतिस्तथा।
[2]रीतिरुक्तिस्तथा प्रौढिरथैषां लक्ष्यलक्षणे॥'

गुणास्त्रिविधा बाह्या आन्तरा वैशेषिकाश्च। बाह्याः शा[3]ब्दा आन्तरा आ[4]र्था वैशेषिका दोषगुणाः। न चोत्कर्षहेतुर्गुणः। अलङ्कारेऽति[5]व्याप्तेः। न चोत्कर्षहेतुत्वे सति समवायवृत्त्या वर्तमानो गुणः। श्लेषसमाधिप्रभृतिष्वव्याप्तेः। तथा च [6]सहजोत्कर्षहेतुर्गुणः। अलङ्कारस्यौपाधिको[7]त्कर्षहेतुत्वादिति। प्रेयःसुकुमारकान्तयो माधुर्यमेव। समता[8] वैषम्याभावः। अर्थव्यक्तिः प्रसादः। उदात्ततानुप्रासा[9]लङ्कारः। सुशब्दतासभ्यार्थताया अभावः। अन्यत्रान्यगुणारोपः समाधिः। सौक्ष्म्यं संक्षेपो विस्तर[10]स्तूपाधिरेव। तेनैषा[11]मलङ्कारत्वम्। अत एव समाधिसौक्ष्म्यप्रेयउदात्तप्रभृतीनामलङ्कारगणनायामेव दण्डीकारलिखनम्। संमितमतिरिक्तन्यूनयोरभावः। श्लेषो विसन्ध्य[12]भावः। तेन प्रौढिमाधुर्यप्रसादौजोगाम्भीर्यपाका एव गुणाः। पाकस्तु रसविशेषोत्पत्तिजनको गुणसमुदायः। [13]न चौजो गौडी रीतिः तच्चेद्गुणः स्यात्तर्हि वैदर्भ्यामीषत्समासोऽपि गुणः स्यादिति वाच्यम्। तस्यापि माधुर्यगुणत्वात्। ननु[14] माधुर्यं काटवाभावः। प्रसादो[15] व्याकीर्णाभावः। एवमेते[16]ऽपि दोषाभाव इति चेत्। सत्यम्। तारत्वमन्दत्वयोर्यथा तारतराद्यनुभावादितरेतर[17]मभावात्मता नास्ति तथा मधुरतरप्रसन्नतरगम्भीरतरपक्वतराद्यनुभवादत्राप्यवान्तरजातिकल्पना। अभावजात्यनभ्युपगमात्। तथापि सम्प्रदायानुरोधेन ते पृथगुच्यन्ते।

पदयोः सम्यक्सन्धिः शब्दश्लेषः। सम्यगर्थनिर्देशोऽर्थश्लेषः। उभय[18]मपि यथा—

धावद्भ्यां भूतभृङ्गाभ्यामन्योन्यमुपलालि[19]तम्।
गतयोरीशयोः कुञ्जमेकमास्यमुपास्महे॥

कर्मकर्तृक्रियाणां प्रसिद्धानां समावेशः शब्दप्रसादः। सकलप्रसिद्धभङ्गिभिरर्थविन्यासोऽर्थप्रसादः। उभयमपि यथा—

युवतिविरहभाजा यन्मया भर्त्सितोऽसि
क्षणमपि न सुधांशो भक्तिभिर्भावितोऽसि।
तदखिलमपहर्तुं मूर्ध्नि कर्तुं भवन्तं
स्फटिकरुचिरजालं ज्योतिराद्यं स्मरामि॥

उपक्रान्तस्य बन्धस्य समता शब्दसमता। बन्धस्त्रिविधो मृदुः स्फुटो मिश्रश्च। मृदुर्वैदर्भी प्रस्फुटो गौडी मिश्रो लाटी। प्रारब्धस्यार्थस्य निर्वाहोऽर्थसमता। उभयमपि यथा—

किमुरसि गरिमा किमालि मध्ये तव तनिमा किमु वक्रिमा दृशोर्वा।
वचसि मधुरिमा किमद्य देहे नवपटिमा समुदेति मे वितर्कः॥

वैदर्भी रीतिरर्थो मृदुः।

सन्धिरीषत्समासः शब्दमाधुर्यम्। क्षमार्थमाधुर्यम्। [20]उभयमपि यथा तातचरणानाम्—

तारुण्यं मुखमण्डले न च वैदग्ध्यमन्यादृशं
न भ्रूभङ्गपरिग्रहो न च रहःप्रश्नेऽपि मौनस्थितिः।
एतत्संप्रति संतनोति मनसः कोपं च [21]मद्वस्तुनि
स्वाधीने पुनरेव पङ्कजदृशो यत्र प्रभुत्वग्रहः॥

अनिष्ठुराक्षरप्रायं सुकुमारम्। अस[22]म्भववारणाय प्रायपदं दत्तम्। अक्षरं द्विविधं निष्ठुरमनिष्ठुरं च। अल्पप्रमाणमनिष्ठुरम्। अर्थस्याकाठिन्यमर्थसुकुमारता। उभय[23]मपि यथा—

पुष्पमाला[24]ममूं बाला कथमेषा सहिष्यते।
इति चिन्तां वहन्मध्यः कृशो [25]वामदृशोऽभवत्॥

अर्थप्रतिपादकः शब्दः प्रतिपन्नश्चार्थोऽर्थव्यक्तिः। उभय[26]मपि यथा तातचरणानाम्—

कमलाकुचकनकाचल[26]शशधरमाभीरसुन्दरीवदनम्।
सुविततशेषफणावलिकमलवनीभृङ्गमच्युतं वन्दे॥

दीप्ततमा वर्णघटना शब्दकान्तिः। दीप्ततमोऽर्थोऽर्थकान्तिः। उभयमपि यथा तातचरणानाम्—

[27]एत्य पश्यत मृगीदृशो यशोवल्लिरुल्लसति पुष्पधन्वनः।
भूतभर्तरि दिगम्बरे वरे भू[28]धरेन्द्रतनयानुरज्यति॥

अनुप्रासः प्रेमरसश्चोक्तः। श्लाघ्यविशेषणयोगः शब्दोदारता। श्लाघ्यमनारोपितो गुणः। चाटूक्तौ च लोभ[29]पूर्वकत्वेनारोपितो गुणः। आशयप्रकाशोऽर्थोदारता। यथा—

महीं महीयसीं मुञ्चन्मुञ्चन्प्रीति[30]करीं पुनः।
रामः कौशल्यया मुक्तो मुक्तो नैव स्मितत्विषा॥

समानजातीयदीर्घस्वरबहुलाक्षरं शब्दोदात्तम्। ऐ[31]श्वर्यद्योतकोऽर्थोऽर्थोदात्तम्। यथा—

प्रदीपीभव तिग्मांशो शीतांशो यामिकीभव।
द्वारीभव शचीनाथ श्रीनाथः स्वापमीहते॥

ईकारबाहुल्यमैश्वर्यं च।

ओजः समासबाहुल्यं शब्दगुणः। ननु—

'एते वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः।'

इति दण्डीकारवचनविरोध इति चेत्। विदर्भः [32]सुन्दरः सन्दर्भः तत्सम्बन्धि वैदर्भमिति व्युत्पत्त्या वैदर्भं काव्यम्। तथा च वैदर्भ[33]मार्गस्य काव्यमार्गस्येत्यवगन्तव्यम्। अत एव कण्ठाभरणकारेण गुणगणनायां विशेषो न कृत इति। ओजः प्रौढं तेजः शब्दगुणः। क्रमेणोदाहरणे—

युष्मत्तुङ्गतरङ्गटापपटलव्याभुग्नभूमीभर-
भ्रश्यन्मौलिकिरीटरत्नमुरगाधीशे मुहुर्मूर्च्छति।
स्वं स्वं त्रातुमितस्ततः प्रचलिताः प्रायः पताकाच्छला-
दुद्भ्राम्यन्ति भुजङ्गराजनगरीदर्वीकरश्रेणयः॥

यदि दिशसि महीं लतामिवाम्भोनिधिषु निधाय चिराय लोलयामि।
परिणतफलवत्पतन्तु शैलास्त्यजतु तदुद्वहनश्रमो भटानाम्॥

हनुमतोऽध्यवसायः।

गाढाक्षरबन्धमौर्जित्यं शब्द[34]गुणः। ओजसि[35] समासप्राधान्यमत्र गाढाक्षरता तेन ततो भेदः। व्यङ्ग्या[36]लङ्कार और्जित्यमर्थगुणः। उभय[37]मपि यथा—

वामे भीमः प्रवि[38]ततभुजादण्डचण्डप्रतापः
स्फूर्जच्चक्रक्षुभितदिनकृद्दक्षिणे चक्रपाणिः।
अग्रे व्यग्रीकृतरिपुकुलो वर्तते धर्मपुत्रः
पैत्र्यः पन्थाः समर[39]विजयो नः करे चापवल्लिः॥

अस्य बहुवचनाद्गर्वो व्यङ्ग्यः।

[40]चाटूक्तिः प्रेयः। लोभपूर्विका स्तुतिश्चाटूक्तिः। ईप्सितार्थः प्रेयोऽर्थगुणः। उभय[41]मपि यथा—

वाणी नीरजिनी दिवाकरकृपाकल्लोलिनी वारिधेर्-
दृष्टिं स्नेहनिधे निधेहि ममतां दीने दयार्द्रं मनः।
अस्मद्वारिनिबद्धसिन्धुरघटाव्यालोलकर्णानिलैः
पीयन्तामरविन्दसुन्दरदृशां स्वेदा[42]म्भसां बिन्दवः॥

सम्बोधनं चाटूक्तिः। सम्पदीप्सितम्।

सुप्तिङश्च निर्वाहः सुशब्दता शब्द[43]गुणः। असतः समीचीनतयोपन्यासोऽर्थसुशब्दता। क्रमेणोदाहरणे—

संग्रामाङ्गणमेष्यतो रघुपतेः प्रौढैः प्रतापा[44]नलैर्-
द्रागेव द्रवरूपतामुपगते चामीकराणां चये।
भ्रश्यद्वासवधामधोरणि मुहुर्मूर्च्छं[45]दिग्गजग्रामणि
[46]क्लिश्यत्स्वस्तरुणि त्रसत्फणि तलं मेरोः समुन्मीलति॥

कान्तारेषु स्खलति भजते भूभृतः कुञ्जधारां
मध्ये वारां वि. . . . . .गाहते निम्नगायाः ।
रोहत्युर्वीरुह[47]मनुसरत्यब्धिवर्गस्य वेलां
श्लिष्यत्येवं[48] त्वदसिमुरगं शङ्कमानः समीरः ॥

अर्थसुशब्दता यथा—

कविर्गणेशो वसुधां विहाय स्वर्लोकमालोकितुमाजगाम ।
देवी गिरां दीर्घतरं श्वसन्ती शैवालशय्यासु वपुर्बभार ॥

स्वर्लोकमालोकितुमिति पदेन[49] निधनमर्थ उक्तः ।

अन्यधर्मस्यान्यत्रारोपः शब्दसमाधिः । व्याजावलम्बनमर्थसमाधिः । क्रमेणोदाहरणे—

राधां निरीक्ष्य पथि केलिवने विकीर्णं
कस्या इदं श्रवणभूषणमित्युदीर्य ।
गृह्णन्करेण पुलका[50]ङ्कुरदन्तुरेण
देवो दधौ विकसितस्मितरोचिरास्यम् ॥

दन्तुरो दन्तस्य विकासः पुष्पधर्मः ।

वनिताकृतिं समुपकल्पयता भ्रमता लतापरिसरे मिलिता[51] ।
कपटेन कैटभजिता हसता वनिता धृता करसरोरुहयोः ॥

शब्दस्य परिशेषः शब्दसौक्ष्म्यम् । अर्थस्य परिशेषोऽर्थसौक्ष्म्यम् । क्रमेणोदाहरणे—

भृङ्गध्वनिः कोकिलकण्ठनादः सायं तथा हंसरुतं शशाम[52] ।
मञ्जीरमञ्जुध्वनिरङ्गनानां मनोभवं जागरयाञ्चकार ॥
हरिश्चन्द्रे नले कर्णे बलौ मुञ्चति मेदिनीम् ।
अर्थः पार्थिव दाधातोस्त्वयि तिष्ठति तिष्ठति ॥

त्वं केवलमित्यर्थोऽवशिष्टः ।

ध्वनिमत्ता शब्दगाम्भीर्यम् । नारिकेलिपाकप्रयोजकोऽर्थचमत्कारोऽर्थगाम्भीर्यमिति केचित् । तन्न[53] शास्त्रसापेक्षस्य दोषगणनात् । शास्त्रानभिज्ञसदसि गुणभङ्गप्रसङ्गाच्च । [54]उत्थापितस्यार्थस्य निर्वाहोऽर्थगाम्भीर्यम् । यथा—

[55]अये हरजटाजूटसङ्गिनी[56] स्वस्तरङ्गिणी[57] ।
स्मरतः श्यामलं धाम पदङ्घ्रौ मे लुठिष्यति ॥

विष्णुशरीरावाप्तिर्व्यङ्ग्या । द्वितीयं यथा—

यूनां धैर्यतृणाङ्कुरं कवलयन् व्रीडाम्बुपूरं पिबन्
शृङ्गारो हरिणस्तव स्तनगिरेः सीमानमारोहति ।
नाभेः काचन तस्य निःसृतवती कस्तूरिका[58]वल्लिका
रोमश्रेणि[59]महार्घतां वितनुते कल्याणि जानीमहे ॥

शब्दनिष्ठो विकासः शब्दविस्तरः। अर्थनिष्ठो विकासोऽर्थविस्तरः। क्रमेणोदाहरणे—

आकाशे वसतिं चिराय कृतवान् भूतिद्युतिं न्यस्तवान्
देहे लाञ्छनरङ्कुचर्म धृतवान् पाथोनिधौ स्नातवान्।
देवेभ्यस्तनुदक्षिणां निहितवान् सर्वं सुधादीधितिः
तेषामेव फलं यदम्बुजदृशो वक्त्रोपमां लब्धवान्॥

[10]द्वितीयं यथा—

ब्रह्माण्डे कथमत्र मास्यति यशः श्रीरामभूमीपते
निर्मातुं किमु[11] तेन वाञ्छति विधिर्ब्रह्माण्डभाण्डान्तरम्।
मृत्कैलासमहीधरः शशधरश्चक्रं पयोधिः पयो
दण्डः कुण्डलिनायकः सुरसरित्सूत्रं समुन्मीलति॥

ब्रह्माण्डाधिकपरिमाणा तव कीर्तिरित्यर्थविस्तरः।

शब्दसङ्कलनं शब्दसंक्षेपः। अर्थसङ्कलनमर्थसंक्षेपः। [12]उभयमपि यथा—

गीतायाः प्रथमो वर्णः पुरुषार्थचतुष्टयम्।
ऋते तस्मात्परे वर्णाः पठ्यन्ते लोकलज्जया॥

सकलं प्रथमवर्णेन वृत्तमिति [13]शब्दार्थयोः संक्षेपः।

शब्दार्थयोरन्यूनातिरिक्तं शब्दार्थयोः संमितम्। उभयमपि यथा—

देवः पञ्चशरो वणिक् सुरपुरीशातोदरीणां पुनर्
दण्डी भ्रूलतिका दृशौ किमु तुलापात्रद्वयं दीप्यति।
गन्धर्वस्य निजाम[14]कस्य च वपुःसौन्दर्ययोर्न्यस्तयोः
साम्यान्निश्चलतारयोर्न [15]हि तयोरास्ते[16] निमेषोदयः॥

भाव[17]-पूर्विका शब्दवृत्तिः शब्दभाविकम्। [18]अर्थवृत्तिरर्थभाविकम्। प्रत्येकं[19] यथा—

त्वं मे वाडवतप्तस्य चन्दनं चन्द्र वक्षसः।
इति व्यालोलकल्लोलनादैर्वदति वारिधिः॥

सुतवात्सल्यभावः।

अद्य सखि निर्गतास्मि[20] श्वश्रूवचसा रसालकुसुमायाम्।
भुवि दर्भदूषितायां स्खलिता कह्लारकोमलैरङ्गैः॥

नखक्षतादिगोपने तात्पर्यम्।

आरोहावरोहौ शब्दगतिः। आरोहः पाठे दीर्घस्वरता। अवरोहः पाठे नीचस्वरता। [21]श्लिष्टशब्देनार्थान्तरसूचनं शब्दगतिः। यथा—

पश्य पश्य मुरारातेर्घनश्यामलमम्बरम्।
अद्यापि न कुतो हेतोः साधुवृन्दावने मनः॥

उक्तेनार्थेनार्थान्तरसूचनमर्थगतिः। यथा—

पथिक भवति दृष्टे कामदेवाभिरामे
प्रियतममुखशोभासम्पदं संस्मरन्त्याः।
शिशिरयति शरीरं[७२] पद्मजन्मा समीरः
सुखयति च मनो मे शारदः शीतभानुः॥

स्वयंदूत्यमत्र प्रकटितम्।

शब्दस्योपक्रमनिर्वाहः शब्दरीतिः। अर्थस्योपक्रमनिर्वाहोऽर्थरीतिः। उभयमपि यथा—

मौलौ माल्यति कज्जलत्यथ दृशोर्वक्त्राम्बुजे पत्रति[७३]
श्रोत्रे [७४]पद्मति हस्तयोर्वलयति ग्रीवातटे हारति।
मध्ये मेखलति प्रसह्य पुरतः[७५] पादाम्बुजे हंसति
श्रीकृष्णस्य दृग[७६]म्बुजं कथमहो राधे तवाग्र्यं[७७] तपः॥

शब्दभङ्गिः शब्दोक्तिः। अर्थभङ्गिरर्थोक्तिः। यथा—

भोक्तुं गर्भवती किमिच्छसि मृदं शम्भो शिवं[७८] धत्तुरात्
शुभ्रं ते वसनं पिता प्रहितवान् भद्रं गजेन्द्राजिनात्।
पद्भ्यामेव कुतः प्रयासि गिरिजे सम्यग्वृषारोहणाद्
इत्थं शैलभुवो[७९] निशम्य वचनं स्मेरो हरः पातु वः[८०]॥

द्वितीयं यथा[८१]—

वाणी कार्तिकरोहिणीपति[८२]गलत्पीयूषकल्लोलिनी
धत्ते दृष्टिरकालकुन्दकलिका[८३]लावण्यलीलायितम्।
नो जाने गमयिष्यतस्तव चिरादङ्के दिनं केलिभिः
कस्य श्रीफलसुन्दरस्तनि भवेदेकादशस्थो गुरुः॥

कंचिदभिप्रेत्य कस्याश्चिदर्थभङ्गिः।

प्रौढिः शब्दपरिपाकोऽर्थपरिपाकश्च। पाकस्त्रिविधो नारिकेलिपाकः सहकारपाको द्राक्षापाकश्चेति। ग्राम्योपनागरनागरेण पदेन[८४] घटितोऽतिविचारार्थो नारीकेलिपाकः। प्रचुररसप्रसरगुणगरिष्ठवर्णकलापकमनीयः[८५] सहकारपाकः। नागरोपनागरमृदुपदसुन्दरः परम[८६]गभीरहृद्यनिरवद्यरसो द्राक्षापाकः। मृदुर्वैदर्भी। हृद्यः शृङ्गारः।

नारीकेलिपाको यथा तातचरणानाम्—

अर्धं चन्द्रमसो विभिद्य विधिना [८७]भालः कृतो भ्रूमिषात्
बन्धस्तत्र सुधाविनिर्गमभिया दत्तोऽञ्जनैः[८८] सीमनि।
भित्त्वा मध्यममुष्य नेत्रसरितोः[८९] साभूद् द्विधा निर्गता
तत्रस्थोऽञ्जनबिन्दुरेव भजते तत्कृष्ण[९०]तारश्रियम्॥

एवमन्यावुदाहरणीयौ।

अभिप्रेतार्थनिर्वाहोऽर्थप्रौढिः। यथा—

आक्रान्ते सहसा तुरङ्गरजसा वारांनिधौ वाडवो
देव त्वत्प्रतिपक्षपक्ष्मलदृशां वक्षःस्थलं निर्ययौ।
लक्ष्मीः पीनपयोधराचलचलत्कह्लारमालारजः-
पुञ्जैः पिञ्जरमम्बरं विदधती त्वत्सौधमारोहति॥

विपक्षनारीणामन्तस्तापस्तव लक्ष्मीप्राप्तिरित्य[11]र्थः।

इति श्रीभानु[12]दत्तविरचितेऽलङ्कारतिलके गुणनिरूपणं[13] नाम तृतीयः परिच्छेदः॥

## VARIANT READINGS

### I

[1] वो B. [2] रहर्वेदश्च C. [3] °गुणागुणाः अलङ्काराः भूषणानि A. [4] Omitted. AC. [5] दोषानुदयात् AC. [6] लोकाय यशसे च BC. [7] °द्रूवं AC. [8] कौशिकी C. [9] °संवलद° B. [10] °सकलदिङ्मण्डलम् B. [11] °शम्भुममृतकरकला° B. [12] °वाहधोरनिर्घोषविभ्रमम् B. [13] 'द्रुत-विलम्बिता' इत्यादिः 'त्रिमिश्रिता अपि षट्' इत्यन्तो ग्रन्थो नास्ति। C. [14] °विगलित-शङ्खपटल° B. [15] हलधर omitted. AC. [16] द्विमिश्रादय A. [17] जय नयनानन्द A. [18] Omitted. AC. [19] 'या प्रवर्तते' इत्यादिः 'रीतयश्च षट्' इत्यन्तो ग्रन्थो नास्ति। C. [20] °षु B. [21] पञ्चपदसमासा C; पञ्चपदसमासाधिका A; पञ्चाधिकसमासा B. [22] °कुण्डल C. [23] स्फूर्जध्वान C; स्फूर्जत् वात B; स्फूर्जद्दान A. [24] °हो B. [25] सन्ध्या नो AC. [26] दृक्पात° B. [27] 'सा च' इत्यादिः 'तासामुदाहरणम्' इत्यन्तो ग्रन्थो नास्ति। B. [28] °क्रियाणां AC. [29] पृथक् दर्श° B. [30] This sentence is omitted. C. [31] °नवराग° A. [32] °न्ति वि° AC. [33] उन्निद्र° B. [34] विश्व° AC. [35] °शः प्रकल्प्य B. [36] चहूत्कृति A; चहूककृति C. [37] °वितरतु B. [38] Omitted. B. [39] °निष्क्रम° B. [40] °स्यादावेव योनिदानं A. [41] युध्यत्° B. [42] दहनित्पाकायति A; दहनत्यायाकति B; not clear. C. [43] स्रवति A. [44] 'ति केचित्' इत्यादिः 'भवति सात्वती' इत्यन्तो ग्रन्थो नास्ति। A. [45] °लिखनात् B. [46] शान्तावति° B. [47] °कादीनीति A. [48] °रं गभीरोक्तिः B. [49] प्रसक्तमपहाय A. [50] °येव A. [51] हि सा C. [52] मोहिनी B. [53] °च्छ° B. [54] °रसः B. [55] कान्ति° C. [56] °हे° B. [57] हरियुक्तविप्र° A. [58] °विमिश्रणा लाटी A; °विदर्भयोर्विमि° C. [59] स्वनेन B. [60] Omitted. A. [61] हास्या° B. [62] यत्रागत्या A. [63] °मे A. [64] चोपरागः A. [65] हास्यमुखं B. [66] सार्धं B. [67] स्वान्तं A. [68] वासं B; omitted. C. [69] °दृभृङ्गी AC. [70] °रुचितस्मयिता° A. [71] °पातः B. [72] °त्तकवि° C; °कर° B.

II

[1] स्वरूपसत° AB. [2] °षेऽतिव्याप्तिः BC. [3] शब्द B. [4] °शमते C. [5] अरीत्यवाच° B. [6] °का B. [7] °दर्थादौ AC. [8] विशेषः AB. [9] Omitted. AC. [10] Omitted. AC. [11] एतदनुकरणे न दोषाः B. [12] त्र A. [13] द्वः A. [14] °भिरुक्तत्वात् AB. [15] तदेव चिन्तयेत् AC. [16] Omitted. B. [17] एकजाती° B. [18] °ति B. [19] क्षणक्षणम् B. [20] रौद्रस्य AC. [21] चरण° B. [22] महिमेश्वरः B. [23] °ढ° C. [24] °च्युतक° A. [25] °त्व° B. [26] सिंहरूढः BC. [27] समर्थे° A. [28] 'प्रहेलिकायां' इत्यादिः 'चिन्त्या' इत्यन्तो ग्रन्थो नास्ति C. [29] परिश्रमः A. [30] Omitted. A. [31] सम्यगर्थः B. [32] °यार्थो AC. [33] °द्ध° A. [34] Omitted. B. [35] °तरम° AC. [36] Omitted. B. [37] Omitted. AC. [38] This whole sentence omitted. AC. [39] प्रसिद्धप्रसिद्धे B. [40] This line omitted. B. [41] पि omitted. AC. [42] प्रकरप्राप्तो B. [43] °न्ध° B. [44] Omitted. B. [45] °त्वे लक्षणा B. [46] कष्टम् C. [47] माशब्दप्रयोगसन्देहः B; माशब्दोऽस्मच्छब्दप्रयोगे° A; °गे सन्देहः C. [48] °द्धार्थकम् B. [49] सन्देहे° AC. [50] Omitted. B. [51] अत्र Omitted. A. [52] पूर्वमस्यास्मरणम् B. [53] Omitted. AC. [54] जगत्यभि° B; जात्याभि° C. [55] देवं AC. [56] मि A. [57] °ङ्केतः AC. [58] °हेतु B. [59] एवममङ्गलत्रितयमपि यथा B. [60] °याचना B. [61] °दूहनीयम् B. [62] कविसंगृहीतेषु omitted. AC. [63] न दोषः B. [64] 'रसविपरीता' इत्यादिः 'दोषाभावः' इत्यन्तो ग्रन्थो नास्ति B. [65] Omitted. BC. [66] Omitted. AC. [67] °षणमिति AC. [68] स कोऽपि omitted. AC. [69] °द्धार्थम् A. [70] °रिति B. [71] न दोषः B. [72] Omitted. A. [73] विधेयस्य AC. [74] °स्या° B. [75] बोध omitted. B. [76] °अन्वयदोष° AC. [77] पूर्णच° A; पूर्णश्च° C. [78] वाक्ये A; वाक्य omitted. C. [79] न चात्र समास्तत्रासमासासमास इति नियमः। B. [80] त्रुटितम् B. [81] °स्य° C. [82] वाक्यस्यैते B. [83] 'दुष्टविसर्ग' इत्यधिकम् B. [84] °र्था° B; र्धान्तरैकवाचका omitted AC. [85] °भिमत° A; °भित° C. [86] °च्य° C. [87] °नाधिकपदा° AC. [88] °द° B. [89] Omitted. A. [90] Omitted. B. [91] °पदादयप्र° B. [92] चरस्य AC. [93] Omitted. BC. [94] Omitted. AC. [95] Omitted. A. [96] Omitted. AC. [97] °वे B. [98] गिर्यथावदयं हित्वा यथा एष्यति सो गृहम्। A; गिर्यथा पतनं हित्वा यथा एष्यति मे गृहम्। C. [99] कङ्कणे AC. [100] °द्रा° BC. [101] °क्ता° AC. [102] मया सुप्तो हरिगताम् B. [103] न दोषः B. [104] °क्यानुरु° B. [105] Omitted. AC. [106] °नं BC. [107] 'खद्योत' इत्यादिः 'विशेषणोपमाने यथा' इत्यन्तो ग्रन्थो नास्ति। A. [108] °रश्मि° C. [109] अधम° C. [110] दोषाय C. [111] °कोपमानं C. [112] °तला° AC. [113] स्फुटौ B. [114] एह्यग्रे C; प्रेह्यग्रे B. [115] Omitted. A. [116] 'लघो' इत्यादिः 'तरणेरस्य' इत्यन्तो ग्रन्थो नास्ति। A. [117] Omitted. AC. [118] Omitted. AC. [119] स्फुटतरा B. [120] Omitted. B. [121] 'उत चन्द्र उत पुरन्दर उत नल उत विक्रमादित्यः। उत गन्धर्व उत स्मर उत सुन्दरि मैथिलो नृपतिः।' इत्यधिकम् B. [122] स्मरः AC. [123] उत चन्द्र etc., as above. C; A reads पुरन्द्र, सुन्दर and नरपतिः for पुरन्दर, सुन्दरि and नृपतिः. [124] दल omitted. AC.

[१२५] °र्षं B; °र्षोऽपप्रकर्षोऽसौ शब्दगत: यथा A. [१२६] ईश omitted AC. [१२७] °शी BC. [१२८] °र्थं C; तादर्थ्ये B. [१२९] यथा तदर्थं A; यथा तदर्थे C; तादर्थ्यं यथा B. [१३०] °णे AC. [१३१] °चास-° माससमासगत: A. [१३२] °तो A. [१३३] °सा C. [१३४] अहो कालस्य माहात्म्यं etc. AC. [१३५] °स AC. [१३६] °नभि° AC. [१३७] 'व्यासस्य' इत्यादि: 'योगो भवति' इत्यन्तो ग्रन्थो नास्ति। A. [१३८] Omitted. C. [१३९] 'हेत्वादे:' इत्यादि: 'वाक्यान्वयिनो' इत्यन्तो ग्रन्थो नास्ति। A. [१४०] द्वितीयार्धे C. [१४१] त्रुटितम् C. [१४२] °धर्मान्तरै° B. [१४३] Omitted. AC. [१४४] सुखाय B. [१४५] तथा च A; तथा C. [१४६] वक्तुं B. [१४७] समुच्चयार्थश्चकार: श्रितं चेति कर्तुं युज्यते। AC. [१४८] °पदे AB. [१४९] हेत्वर्थे हिपदमभिधातुं युज्यते। AC. [१५०] 'असमाजे' इत्यादि: 'युज्यते' इत्यन्तो ग्रन्थो नास्ति। C. [१५१] तु A; च C. [१५२] यद् omitted. AC. [१५३] °जे AC. [१५४] °वधो° AC. [१५५] Omitted. BC. [१५६] 'शोण' इत्यादि 'यथा' इत्यन्तो ग्रन्थो नास्ति। C. [१५७] 'हरेरस्य' इत्यादि: 'यथा' इत्यन्तो ग्रन्थो नास्ति। A. [१५८] तृतीय° AC. [१५९] Omitted. B. [१६०] Omitted. AC. [१६१] एव omitted AC. [१६२] °कान्ति° B. [१६३] विरुद्धयो: B. [१६४] वारिजं A. [१६५] विहगजीवितं A. [१६६] Omitted. BC. [१६७] इच जातीय: B. [१६८] °रोधेना° B. [१६९] निरुच्यते B. [१७०] This and the following line are omitted. A. [१७१] असादृश्योपमं C. [१७२] °मपि AC. [१७३] Omitted. AC. [१७४] °विरुद्धं A; °भिन्नविरुद्धं BC. [१७५] Omitted. C. [१७६] °तामापन्नं A. °तामनापन्नं B. [१७७] Omitted. AC. [१७८] दीर्घसन्तापोक्तौ B. [१७९] प्रथमं यथा B. [१८०] मुक्तरत्न° B. [१८१] 'बुधो' इत्यारभ्य 'अपक्रमं यथा' इत्यन्तं नास्ति। C. [१८२] न omitted. BC. [१८३] भाग्यसम्पन्नमनीषिण: B. [१८४] °मनुद्वेगकरम् B. [१८५] सद्य: AC. [१८६] °ञ्चास्य A. [१८७] Omitted. AC. [१८८] 'विरुद्ध' इत्यारभ्य 'चोक्तम्' इत्यन्तं नास्ति। B. [१८९] आलिङ्गयतां AC. [१९०] किमुत B. [१९१] °ज्ज्वल: B. [१९२] दशास्यमुखमादर्शयामास C. [१९३] °त्याङ्गम् AC. [१९४] एवासीत् AC. [१९५] राधाधारो° A; धाराधर° B; राधरधाराधोपम: C. [१९६] त्यज स्वर्गसुखस्पृहाम् B. [१९७] Omitted. B. [१९८] This and the following sentences omitted. C. [१९९] 'विरुद्धं यथा' इत्यारभ्य 'न दोष:' इत्यन्तं नास्ति। C. [२००] 'केलि°' इत्यारभ्य 'देशविरुद्धं यथा' इत्यन्तं नास्ति। C. [२०१] 'मदूषणम्' इत्यारभ्य 'सम्प्रदायविरुद्धं यथा' इत्यन्तं नास्ति। C. [२०२] °ऋमिवाददे A. [२०३] 'शुभ्रीकृतो' इत्यारभ्य 'हास्यरसे न दोष:' इत्यन्तं नास्ति। C. [२०४] कृपा B. [२०५] °पते नय° AB. [२०६] Omitted. AC. [२०७] अन्यविकृतो AC. [२०८] प्रयुज्यते B. [२०९] चेदयं दोष: A. [२१०] पादा° B. [२११] °पुनरुक्तं C. [२१२] Omitted. AC. [२१३] Omitted. BC. [२१४] सित° A. [२१५] 'साकाङ्क्षा' इत्यारभ्य 'शब्ददूषणम्' इत्यन्तं नास्ति। C. [२१६] °दूषणत्वात् AC. [२१७] Omitted. AC. [२१८] °त्ते कारणं नोक्तम् A; °त्तकारणं नोक्तम् C. [२१९] Omitted. AC. [२२०] °विरुद्धं A; °भिन्नविरुद्धम् C. [२२१] न युक्तम् B. [२२२] °तृतीयेत्य° B. [२२३] This sentence omitted. AC. [२२४] यद्यप्यस्याकाङ्क्षायां न दोषत्वं तथापि इत्यधिकम्। A. [२२५] परित्यक्तस्यैव B. [२२६] Omitted. B. [२२७] °ङ्क्षाभावात् B. [२२८] Add तु C. [२२९] समासमात्र° B. [२३०] °हननानुकूलं AB. [२३१] वाक्या° AC. [२३२] सुधापतिकरणे पुष्टोऽर्थ: B. [२३३] स्फुटोऽर्थ: C. [२३४] श्रीमत् भानुकरमिश्रविर° B. [२३५] °तदुद्धार° B.

III

[१] तद् A. [२] Omitted. C. [३] शब्दा BC. [४] अर्था C. [५] रे व्याप्तिः C. [६] 'सहजोत्कर्षहेतु' इत्यारभ्य 'स्यौपाधिको' इत्यन्तं नास्ति। C. [७] °कगुणोत्कर्ष° A. [८] 'समता' इत्यारभ्य 'न च रहःप्रश्नेऽपि मौनस्थितिः' नास्ति। C. [९] °सादावलङ्कारः A. [१०] °रश्चौपाधिक एव B. [११] इति तेषाम° B. [१२] न्धि A. [१३] न च गौडीरीतिं पञ्चपदसमासाधिकत्वम्। A. [१४] न तु B. [१५] This sentence omitted. B. [१६] °तेष्वपि दोषाभाव° A. [१७] °तरभावना A. [१८] Omitted. A. [१९] °लापितम् B. [२०] Omitted. B. [२१] यद्वस्तुनि B. [२२] 'असम्भव' इत्यारभ्य 'मनिष्ठुरम्' इत्यन्तं नास्ति। B. [२३] Omitted. B. [२४] °श्रमं BC. [२५] मृग° B. [२६] °जलधर° B; Omitted. C. [२७] यो न पश्यति A. [२८] भूधरेद्भुतभयानुरज्यते। B. [२९] भोग° AC. [३०] प्रेमकरीं पुरीम् B. [३१] This sentence omitted. C; अनुप्रासबलकान्तिरिति ततो भेदः। विभूत्युत्कर्षोदात्तम्। B. [३२] Omitted. BC. [३३] वैदर्भ्यं AC. [३४] Omitted. BC. [३५] ओजसि प्राधान्यमन्यत्र गुणम् A. [३६] Omitted. A. [३७] Omitted. AC. [३८] प्रविशति A. [३९] सहज° B. [४०] चाटूक्तिः लोभपुवीका स्तुतिः प्रेयोशब्दगुणः चाटूक्तिः। A. [४१] Omitted. AC. [४२] Omitted. C; ते बिन्दवः स्वेदजाः A. [४३] Omitted. A. [४४] °निलैः BC. [४५] °मज्जद्गज° B. [४६] त्रस्यत्कामिनि निःपतद्वनितलं AC. [४७] °र्वीधर° AC. [४८] °त्येलां C; त्येवां B. [४९] Omitted. C. [५०] °कान्तर° AC. [५१] मिलता B. [५२] शशाक B. [५३] B adds शास्त्रसापेक्षमर्थगाम्भीर्यमिति केचित्। [५४] This sentence omitted. BC. [५५] द्वये B. [५६] °नि ABC. [५७] °णि ABC. [५८] °मालिका A. [५९] °श्रोणि° AC. [६०] Omitted. AC. [६१] विधिरेष वाञ्छति किमु B. [६२] Omitted. B. [६३] अर्थसंक्षेपः B. [६४] निजामनस्य AC. [६५] निहितयो° ABC. [६६] °योस्तेते विशेषादयः B. [६७] शब्द° B. [६८] अर्थपूर्विका वाक्यप्रवृत्तिरर्थभाविकम्। B; C only add अर्थपूर्विका at the beginning. [६९] Omitted. A. [७०] सि B. [७१] 'श्लिष्टशब्देन' इत्यारभ्य 'साधुवृन्दावने मनः' इत्यन्तं नास्ति। B. [७२] सनीरं A; समीरं B. [७३] वक्रति AC. [७४] मन्थति A; मथति C. [७५] परितः C; पुरितः A. [७६] दृगञ्चलः B; दिग° C. [७७] तवोग्रं B. [७८] शुभं B. [७९] शैलसमूहराजदुहितुः AC. [८०] नः B. [८१] Omitted. B. [८२] °गण° BC. [८३] °लतिका° B. [८४] B adds कठोरनागराक्षरेण. [८५] B adds सुकुमारः. [८६] पदगम्भीर° AC. [८७] भाले C; भालैः A. [८८] °नः A; °ने C. [८९] °तो C; °तौ B. [९०] °सार° A; °सारा° C. [९१] °रित्यभिप्रेतोऽर्थः B. [९२] भानुकरमिश्र° B. [९३] °पणस्तृतीयस्तरङ्गः।

ALAMKĀRA - TILAKA OF BHĀNUDATTA

G. V. DEVASTHALI

(*Continued from page 86 of Vol. 23, N.S.*)

# श्रीभानुदत्तविरचितं

## अलङ्कार-तिलकम्

## चतुर्थः परिच्छेदः ।

अथालङ्काराः । औपाधिकप्रकर्षहेतुरलङ्कारः । उपाधिः क्वचित् केश्चित् । तत्र वक्रोक्त्यनुप्रासयमकश्लेषचित्रपुनरुक्तवदाभासाः षडिति काव्यप्रकाशकृतः । गतिरीतिवृत्तिच्छायामुद्रायुक्तिभणितिगुम्फनाशय्यापठित्युक्तिगूढप्रश्नोत्तरप्रहेलिकाध्येयगेयप्रेक्ष्याभिनेया इति कण्ठाभरणकृतः । वाक्छलं च वक्रोक्तिः । सा च श्लेष एव । एकार्थे छलानुपपत्तेः । काकुष्वपि नानार्थास्वेव वक्रोक्तिः । किं नकारादिशब्दस्यावयवत्वेन नानार्थत्वात् । न च वक्रोक्तिः श्लेष एवान्तर्भवति । कारणतायां तस्योपक्षयात् । बालो नाथेत्यादौ शाब्दो गुणः । सा च पदाभङ्गपूर्विका पदभङ्गपूर्विका । पदभङ्गोऽपि सर्वनामासर्वनामभेदाद् द्विधा ।

क्रमेणोदाहरणानि—

'भोगी धमति कः कुञ्जे कृष्णो गर्यं विधीयताम् ।
मा भैषीः सखि जानामि मन्त्रं सिद्धिप्रदायकम् ॥

तेषां न तरुणा भेदो येषां भक्तिर्न शङ्करे ।
भवाब्धौ येन निर्मग्नं तरुणा विरलाः सखे ॥

किं नरकुलं विदग्धं का कुकथा नैव कर्तव्या ।
कोऽपाक्रियाकलापः कासारप्रक्रिया जगति ॥

वर्णसाम्यमनुप्रास इति केचित् । तन्न यमकेऽतिव्याप्तेः । स्थानानुप्रासेऽव्याप्तेश्च । दूरस्थितेऽपि वर्णेऽनुप्रासव्यवहारापत्तेः । [ वर्णावृत्तिरनुप्रास इति केचित् । तदसत् । लाटानुप्रासे स्थानानुप्रासे चाव्याप्तेः । दूरस्थिते वर्णेऽनुप्रासव्यवहारापत्तेः । ] न च लाटे वर्णावृत्तिरस्त्येव पदस्य वर्णसमूहघटितत्वादिति वाच्यम् । एवं सति यमकेऽतिव्याप्तेर्वज्रलेपत्वात् । किन्त्वभिन्नार्थत्वे सति पूर्वानुभवसंस्कारोद्बोधकत्वे सति श्रुत्या यत्समानमनुभूयते सोऽनुप्रासः । श्रुतिः क्वचिद्वर्णनिष्ठा क्वचित्स्थानादिनिष्ठा । श्रुतिः श्रवणम् । ननु लवलोचनयोर्लोलैर्यत्रातिव्याप्तिः समानश्रुत्यभावादिति चेत् । सत्यम् । श्रुतिर्द्विविधा शुद्धवर्णश्रुतिः स्वरविशिष्टश्रुतिश्च । प्रथममत्र द्वितीयं च छेकादौ प्रयोजकं यमकेऽतिव्याप्तिवारणाय । सत्यम् । तेन च लाटेऽव्याप्तिः । तस्याप्यभिन्नार्थत्वात् । भिन्नार्थे तस्य तात्पर्यमात्रम् । ननु वर्णावृत्तिरनुप्रासोऽस्तु । तस्य क्वचित् स्वरूपं क्वचित्स्थानं क्वचित्स्वर आवृत्त इति चेत् । न । स्थानस्वरयोरावृत्तौ वर्णावृत्तिदर्शनात् । स च च्छेकमालावृत्तलाटभेदाच्चतुर्धा । श्रुत्यनुगता सकृदावृत्तिश्छेकः । यथा—

स्तने निरस्तावरणे प्रियायाः करे च भर्तुः कल्हायमाने ।
विभावरीं वीक्ष्य विभातकल्पां मनोऽनुतापं मदनोऽपि लेभे ॥

श्रुत्यनुगतासकृदावृत्तिर्वृत्तम्[28] । यथा—

सख्यः समस्ता निरगुः पुरस्तादस्ताचलं चुम्बति चण्डरोचिः ।
कथं मुरारे निबिडान्धकारे पारेनदीनामपि मां जहासि ॥

छेकस्तु पदान्तपादाद्ययोः शृङ्खला । यथा वसन्तसन्धौ—

समीरस्य मल्लीमतल्लीदिदृक्षा सिसृक्षा रसालाङ्कुरगानां स्मरस्य ।
द्विरेफस्य चित्रध्वनीनां शिशिक्षा[29] विवक्षा पुनः पञ्चमानां पिकस्य ॥

पदान्तच्छेको यथा तातचरणानाम्—

प्रतिनगरं प्रतिभवनं कन्या त्वमिव कलावति[30] कापि [31]न धन्या ।
अयि मुग्धे परिहर परितापं किमपि [31]न भवने तव दुरवापम् ॥

विभक्तिवचनभेदात् पदान्तच्छेकादौ भङ्ग्यनुप्रासः । यथा—

दिशि दिशि शारदशशधरभासस्तदपि न वदने तव परिहासः ।
कृपयत्येष मनोजमहीपतिरद्यापि न मयि विरहे[32]ज्वरवति ॥

पदान्तवृत्तं यथा—

चैलाञ्चलं कर्षति चन्द्रमौलौ भालानलस्पर्शभयाद् द्रुतायाः ।
भोगीन्द्रसंरुद्धपदाम्बुजायाः पुनातु साचिस्मितमम्बिकायाः ॥

प्रतिवपुरुदयति वेपथुभारः कुचकुम्भे तव नृत्यति हारः ।
भवति कपोले पुलकविकारस्तदपि न विरमति सुदति नकारः ॥

वर्णसाम्यं विनापि श्रुतिमात्रसाम्येनापि पदान्तच्छेकादयः । यथा गीतगोविन्दे—

तालफलादपि गुरुमतिसरसं किं विफलीकुरुषे कुचकलशम् ।

श्रुत्यनुगतक्रमानुगतप्रचुरतरवर्णावृत्तिग्रथनं मालानुप्रासः । मालेव माला । यथा[33]—

निगमव्याकरणं जगदुद्वहनं धरणीवलयसमुद्धरणम् ।
दनुजाधिपदमनं बलिपरिहरणं निखिलक्षत्रक्षयकरणम् ।
दशकन्धरदमनं धेनुकदलनं कपटप्रकटितबहुकरुणम् ।
त्वामन्त्यजदहनं रक्षितभुवनं भजतु मनो मम मधुमथनम् ॥

अनेका[34]वृत्तिर्वृत्तमितीदमपि वृत्तमेवेति केचित् । अनुप्रासस्यापि यमकस्येवाद्यमध्यान्तभेदाः । आद्यानुप्रासो यथा

नीरं किरन्तं जलदं प्रतीत्य चीरं[35] सितं पश्यति नन्दसूनौ ।
धीरं विधाय स्मितमायताक्षी तीरं प्रतस्थे तपनात्मजायाः ॥

एवमन्यदूहनीयम् ।

तात्पर्यमात्रभिन्नार्थकपदावृत्तिर्लाटः । स चैकपदनिष्ठोऽनेकपदनिष्ठः पाद[36]निष्ठः श्लोकार्ध[37]निष्ठश्च । क्रमेणोदाहरणानि

कला कापि कलाभर्तुर्मानिनीमानकर्तरी ।
कामं[37] कञ्चुकिनिर्मुक्तमिव कञ्चुकमञ्चति ॥
अस्ति चित्ते यदि च्छद्म बहुना विनयेन किम् ।
नास्ति चित्ते यदि च्छद्म बहुना विनयेन किम् ॥

न चेदं यमकम् । अभिन्नार्थत्वात् ।

भूते भूतेश ते प्रीतिः प्रीतिस्तव ककुद्मति ।
भुजङ्गमे तव प्रीतिः प्रीतिर्मयि कुतोऽस्तु ते ॥

वीप्सा च लाट एव । स्वरानुप्रासो यथा—

दधाति दृढसन्धानं बाणं कुसुमसायकः ।
तस्य कंसरिपोर्बाले[३९] समाजे नय वासरान् ॥

[४०]यथा वा तातचरणानाम्—

सा का योषित्स च कः पुरुषः प्रभवति [४१]यस्य [४२]न मन्मथविशिखः ।
किन्तु कृशोदरि दृढसन्धानं क्वापि कदापि विमुञ्चति बाणम् ॥

[४३]एनं श्रुत्यनुप्रासं[४४] केचिद्वदन्ति । स्थानानुप्रासो यथा—

भाले विधिर्लिखितवानुपमानं सुभ्रुवस्तस्याः ।
स्मर [४५]एष बिन्दुमकरोत्तस्मिन्मृगनाभिबिन्दुकपेटन ॥

[४६]सर्वत्रानुप्रासे छेकवृत्तिमालाः ।

भिन्नार्थकपदावृत्तिर्यमकम् । वर्णसमूहः पदम् । तेन पदपादश्लोकाधावृत्तीनां संग्रहः । तच्च पूर्णमपूर्णं चेति[४७] । पूर्णं पादावृत्त्यादि । यमकं तु एकद्वित्रिचतुःपादनिष्ठ[४८]माद्यन्तमध्यान्तोपान्तनिष्ठमेकाक्षरद्व्यक्षरादिनिष्ठं च । एक[४९]पादं यमकं यथा—

[५०]मौनवी मा नवीभूता तन्वि व्योम्नि निरीक्ष्यते ।
तारापारावतं हन्तुं नाली न्यस्तेव वेधसा ॥

द्विपादयमकं यथा—

अबलया वलयाञ्चितहस्तया ललितयालि तया समुदीक्षितः ।
मिहिरशीतकरास्तमनाशया यदुपतिर्मुकुलीकुरुते दृशौ ॥

त्रिपादयमकं यथा—

रसमये समये दहनाधिका वरतनोरतनोः शरवेदना ।
इति घनोतिघनोदितनिःस्वनैरुपदिदेश विदेशगताञ्जनान् ॥

चतुःपादयमकं यथा—

कमलिनी मलिनीकरणोद्यतैः स्मरहितैरहितैर्विरहस्पृशाम् ।
समुदितैर्मुदितैः शशिनः करैर्विदधिरे दधिरेणुरुचो दिशः ॥

आद्यन्तयमकं यथा—

घनतरं न तरङ्गय लोचनाञ्चलमसौ कपटी यदुनन्दनः ।
अथ भविष्यति तन्वि हुताशनच्छविरहो विरहोऽपि दुरुत्तरः ॥

मध्यान्तयमकं यथा—

बहुलंचण्डिमचण्डविमर्दनक्षमतया मतया त्रिदिवौकसाम् ।
ज्वलितभीषणलोचनतेजसा गिरिजयारिजयाय विनिर्गतम् ॥

अन्त्ययमकं यथा—

चकार दृष्ट्या चपलं मनो हरः स एष शीतांशुकलामनोहरः ।
कथं न काश्मीरचयः सदारुणः कृतोऽपि भाले सखि यः सदारुणः ॥

उपान्त्ययमकं यथा—

शिवो यदाराधि न बन्धनं तदा मनो यदा साधु न बन्धनं तदा ।
वचः समायाति न दीनतां तदा प्रयाति हर्षाश्रु नदीनतां तदा ॥

शृङ्खलायमकं यथा—

सुन्दरीसुतसमौजै[५२]बन्धुरं बन्धुरम्यमपि निष्फलं जगत् ।
शङ्करं प्रति विधेहि मानसं मानसंवलितमस्तु ते जैनुः[५३] ॥

पादावृत्तिर्यथा—

नवसूनावैली[५४] यस्य कोकिलक्काणकोमला ।
नवसूनावैली[५५] यस्य कविकाव्यमनोहरा ॥

अर्धावृत्ति यमकं यथा—

कंसशास्त्रैर्बलं[५६] कृष्णो न मेने सत्त्वरं जितम् ।
कं सशास्त्रैर्बलं[५७] कृष्णो न मेने सत्त्वरञ्जितम् ॥

अन्यदूहनीयम्[५८] ।

शब्दभङ्गी श्लेषः । स च पदलिङ्गभाषावर्णप्रकृतिप्रत्ययविभक्तिवचनभेदादष्टधा । पदश्लेषो यथा—

अक्षरणमतनुतन्त्रं भाविनिगूढार्थचेष्टितं दधती ।
सा वाणी सा तरुणी या संश्लेषेण तोषयति ॥

वैचेन[५९]लिङ्गभेदो यथा—

युवा सेनासमुद्दामारामे पृथ्वीं समाशति ।
क्रीडाकुञ्जा विपक्षाश्च पर्यस्तशिखरालयः ॥

भाषाश्लेषो यथा—

शिथिलकरिगमनबहुहयकरकञ्चुकवचनाविक्षेपा ।
असमानकपटरञ्जितसेनातरुणी परिस्फुरति ॥

अन्यदप्यूहनीयम् ।

पुनरुक्तभ्रमकरं यत्स पुनरुक्तवदाभासः । नन्वस्य भ्रमकरत्वाद्दोषत्वं न त्वलङ्कारत्वमिति चेत् । सत्यम् । यथा विरोधाभासस्य विरोधभ्रमकरार्थघटनचमत्कारः शोभांकर[६०]स्तथा पुनरुक्तत्वभ्रमकरवर्णविन्यासचमत्कारः शोभांकरः[६१] । स च श्लिष्टोऽश्लिष्टश्च । यथा—

दरविकचकिंशुककाननवनचारी मलयगिरिवातः ।
उद्ग्रीवयति निशान्ते मित्रसुहृद्विहगमिथुनानि ॥

गतिरीतिवृत्तय उक्ताः[६२] । चित्रगूढप्रहेलिकाप्रश्नोत्तराणि चित्रचन्द्रिकायां[६३] दर्शयिष्यामः ।

जातिः संस्कृतादि । तच्च कथितं स्पष्टं च ।

परानुकृतिश्छाया । शिशुच्छेकमत्तादिभेदादनुकृतीनामानन्त्यम् । अनुकृतिर्द्विधा शब्दानुकृतिरर्थानुकृतिश्च । उभयमपि यथा तीत[६४]चरणानाम्—

साकूतं सकुतूहलं सविनयं धात्रीभिराश्वासिता
क्रन्दन्तो गगनाभ्रचुम्बिषु चिरं सौधावलीमूर्द्धसु ।
प्रीत[६५]र्मुग्धमुखेन्दुमण्डलधिया द्राक्संनिकृष्टे विधौ
बाला हुङ्कृतिमाचर[६६]न्ति मसृणोच्छूनाधरोष्ठश्रियः ॥

हुङ्कृतिरिति शब्दानुकृतिः । उच्छून इत्यर्थानुकृतिः ।

मुद्रा भङ्गयोक्तिः । यथा—

अङ्गोद्वर्तनरेणवो मृगदृशः कीर्णास्तडिद्वल्लयैः
सन्दर्भो वचसां पचेलिमसुधासिद्धान्तवैतण्डिकः ।
वक्त्रेन्दोरधमर्ण एष भगवान् दाक्षायणीनायकः
किंवा वाच्यमितोऽपि लोचनरुचौ वैतालिकाः षट्पदाः ॥

अयुक्तसंयोजनं युक्तिः । यथा—

जलदरजतकान्तिकान्तमम्भोनिधिधरणीधरकन्यकोपगूढम् ।
अवति हरति विश्वमङ्गमेकं वहति च कौस्तुभमुण्डदामभूषाम् ॥

प्रथमे विरुद्धगुणयोजना [६८]द्वितीये विरुद्धजातियोजना तृतीये विरुद्धक्रियायोजना चतुर्थे विरुद्धद्रव्ययोजना ।

वचःपरिपाटी भणितिः । सा च सम्भवनिष्ठासम्भवनिष्ठा च । सम्भवतीति सम्भवः । क्रमेणोदाहरणम्—

नगरे तव मेदिनीपते न कियन्तो निवसन्ति कोविदाः ।
मलयाचलसानुसंनिधौ कति वा सन्ति न चन्दनद्रुमाः ॥
गगननिवसतिः क्व शीतरोचिः क्व च हरिणो गिरिकाननैकवासः ।
तदपि कमलकोमले सुधांशौ स्वपिति रतिश्रमकातरः कुरङ्गः ॥

शब्दार्थयोः सम्यक्संघटनं गुम्फना । [ शब्दसंघटनं ] शब्दस्य सम्यक्त्वमर्थसंघटनमर्थस्य सम्यक्त्वं यथावस्थितस्थापकम् । प्रथमं यथा—

जानीमस्तव हेम गौरि हृदयादेष स्मरक्ष्मापतिर्
जृम्भारम्भविजृम्भमाणवदनाम्भोजैः समुत्तिष्ठति ।
मञ्जीरं रसना सुवर्णवलयं सर्वत्र सर्वे यतो
व्यातन्वन्ति चुचूत्कृतिं किमु रणत्कारध्वनिच्छद्मना ॥

द्वितीयं यथा—

भवभूतिभवनबद्धां कृतरक्षां कालिदासेन ।
अथ लब्धबाणवत्सां काव्यगवीं दोग्धुमिच्छामि ॥

कण्ठाभरणकारमतमिति शब्दालङ्कारावसरेऽप्यर्थालङ्कृतिरुपदर्शिता ।

अर्थानामेककालवाचकप्रत्ययेनाभिधानं शय्या । यथा—

गरुडासन गोविन्द त्वयि मे हृदि जाग्रति ।
कालव्यालः कथङ्कारमायुःक्षीरं पिबत्यसौ ॥

विशिष्टज्ञापकोच्चारणं पाठितिः । आनुकूल्यं पदच्छेदकाकुस्वराभिनयादि । पदच्छेदो यथा—

' कङ्कणं कुरुते कान्ता ।'
कं इति चेत् पृथक्पठितमानुकूल्यमवगन्तव्यम् ।

उक्तिरुपदेशः । स च विधिमुखो निषेधमुखश्च यथा—

ध्यायेत धामनिधानं धामनिधानं दृशोस्त्यजन् ।
भवेनं विषमविकारं विषमविकारं न यद् भवति ॥

अध्येयमध्ययनार्हं चतुर्दश विद्याः । गेयं श्रव्यम् । तानि च षट् । आशीर्नमस्क्रिया नान्दी वस्तुनिर्देश आक्षिप्तिका ध्रुवा चेति । एवं प्रेक्ष्यमभिनयो नाट्यालङ्कारो न तु काव्यालङ्कार इति प्रकटितम् ॥

इति श्रीभानुदत्तविरचितेऽलङ्कारतिलके चतुर्थः परिच्छेदः ॥

## पञ्चमः परिच्छेदः ।

अथार्थालङ्काराः । तत्र स्वभावोपमा-परिवृत्ति-अनन्वय-निदर्शन-दृष्टान्त-प्रतिवस्तूपमा-तुल्ययोगिता-रूपक-उत्प्रेक्षा-अपह्नुति-आवृत्ति-विशेषोक्ति-अर्थान्तर-व्यतिरेक-विभावना-सूक्ष्म-कर्म-समासोक्ति-असङ्गति-हेतु-अतिशय-विनोक्ति-सहोक्ति-व्याजस्तुति-निन्दास्तुति-समुच्चय-उदात्त-पर्याय-पर्यायोक्ति-विरोधाभास-रसवद्-ऊर्जस्वि-अप्रस्तुतस्तोत्र-प्रेयः-अनुमान-कारणमाला-परिकर-व्याजोक्ति-परिसंख्या-सार-समाधि-सम-विषम-अधिक-उन्मीलित-प्रतीप-स्मृति-भ्रान्ति-संशय-अनध्यवसाय-एकावली-सामान्य-विशेष-काव्यलिङ्ग-व्याघात-विरोध-भाविक-परिवृत्त-अन्योन्य-उत्तर-प्रत्यनीक-तद्गुण-अतद्गुण-भङ्गी-आक्षेप-दीपक-दीपकमाला-सङ्कर-संसृष्टि-आशिषश्चेति ।

चमत्कारि स्वरूपनिर्वचनं स्वभावोक्तिः । केवलस्वरूपनिरुक्तौ शोभानुदयात् । गोरपत्यमित्यादौ तथा दर्शनात् । तच्च जातिद्रव्यक्रियागुणनिष्ठम् । यथा—

अव्यक्तवाग्व्यक्तकुचाद्रिकान्ति प्रवृत्तदर्पपालि विवृत्तहारम् ।
व्यस्तोरु हस्तोत्पलबद्धनीवि शातोदरी दीपशिखां न सेहे ॥

प्रतीयमानसादृश्यमुपमेति केचित् । तन्न । रूपकेऽतिव्याप्तेः । किन्त्वतिरोभूतभेदत्वेन प्रतीतिरुपमा । न चोत्प्रेक्षापह्नुतितुल्ययोगिताप्रभृतिष्वतिव्याप्तिः । रूपक इव तेष्वपि भेदस्य तिरोभूतत्वात् । सा च द्विविधा । सामान्यवती विशेषवती च । सामान्यवती यथा—

व्रजन्त्याः पथि सीतायाः पुरः पश्चाद्विरेजतुः ।
श्रीरामलक्ष्मणावेतौ गायत्र्याः प्रणवाविव ॥

विशेषवती च वाचकसमानधर्मोपन्यासोपमानोपमेयान्यतरविरहात् । क्वचिच्च क्वचि च्विप्रत्ययेन समानधर्मोपन्यासविरहात् । तत्र प्रत्ययस्यैव सादृश्यवाचकत्वात् । क्वचि यथा—

वातं स्थावरयन् नभः पुटकयन् स्रोतस्विनीः सूत्रयन्
[14]सिन्धुं पल्वलयन् वनं विटपयन् भूमण्डलं लोष्टयन् ।
शैलं सर्षपयन् दिशं द्व्यणुकयन् लोकत्रयं क्रोडयन्[15]
हेलारब्धरयो हयस्तव कथङ्कारं गिरां गोचरः ॥

विधुमुखीत्यादौ वाचकसमानधर्मोपन्यासविरहात् । वृकोदर इत्यादौ वाचकसमानधर्मोपन्यासोपमानाविरहात् । वृकोदरमिव उदरमित्यर्थोऽवगम्यते । न हि प्राणी प्राण्यङ्गमिति मध्यमपदलोपी समासः । उपमेयविरहाद्यथा[16]—

अहं स्वप्ने लताकुञ्जपालिमालि समागता ।
तत्राम्बुदमिवापश्यमर्थं[17] वश्यं न मे मनः ॥

न चेयं[18] लक्षणया लुप्तरूपकम् । उपमानवाचकपदे[19]प्रयोगात् सादृश्यमहिम्ना च हरिर्लक्ष्यते ।
अभूतोपमा यथा—

[20]क्षीरं फेनं यदि यदि सुधासंनिवेशस्तरङ्गो
द्राक्षापङ्को भवति यदि[21] वा शर्करा सैकतं स्यात् ।
भूयादेवं यदि मधुनदी तत्र वन्याविवर्तैः
सोऽयं तस्यास्तुलयति वचै[22]ः शैलराजात्मजायाः ॥

परस्परोपमा यथा—

क्षमा[23]विवेककारुण्यशौर्यसौन्दर्यशालिनोः ।
रामलक्ष्मणयोरेव सादृश्यमितरेतरम् ॥

शब्दसाम्यात् श्लेषोपमा यथा—

साधुवृन्दावनक्रीडापरो देवो जनार्दनः ।
[24]त्वं च तेन महीपाल न पालयसि मां कुतः ॥

एको[25]पमावद् बहूपमाप्यवगन्तव्या ।

यद्यपि परिवृत्त्यनन्वयनिदर्शनप्रतिवस्तूपमादृष्टान्ततुल्ययोगिता लुप्तोपमा एव तेषां पृथक्त्वेऽभूतोपमा–परस्परोपमाक्षयक्प्रभृतिप्रत्ययवर्गा[26]च्योपमानामपि पृथक्त्वापत्तेः । तथापि सम्प्रदायानुरोधात्[27] ते निर्दिश्यन्ते[28] ।

पूर्वपूर्वोपमेयस्योत्तरोत्तरमुपमान[29]भावः परिवृत्तिः । यथा[30]—

रघुर्दिलीपवत् तद्वदजस्तद्वत्तदात्मजः ।
पितुरेवोपमा सूनोरिति सूर्यकुलक्रमः ॥

उपमेयोपमानयोरभेदोऽनन्वयः[31] । यथा[32]—

कुर्वतोरङ्गयोरैक्यं मुञ्चतोर्विरहव्यथाम् ।
गौरीगिरिशयोः प्रेम गौरीगिरिशयोरिव ॥

पर्यवसितासम्भवं निदर्शनम् । यथा—

सहजसुभगकान्तिमण्डलाभ्यामिदमुपलालितमाननं मृगाक्ष्याः ।
भृगुसुतगुरुमध्यवर्तिराकाहिमकरमण्डलमाधुरीं बभार ॥

यथा[33] वा—

क्वाहं स्वल्पमतिः क्वासौ वंशो भगवतो रवेः ।
नलिनीनालरन्ध्रेण पातुमिच्छामि[34] वारिधिम् ॥

उदाहरणमुखोऽर्थनिश्चयो दृष्टान्तः । यथा—

क्रियतेऽनुनयोऽपि काकुवाग्भिः खलतामेव खलस्तथापि धत्ते ।
अपि कुन्दमरन्दसारासिक्ता विषवल्ली विषमेव यत्प्रसूते ॥

उपन्यस्तस्य धर्मस्य धर्मान्तरोपन्यासः प्रतिवस्तूपमा । यथा—

रत्नभूतासि वामोरु दामोदरमतो भज ।
कलानिधेः[36] कला काचिदुचिता मूर्ध्नि धूर्जटेः ॥

रत्नोपमितायाः कलोपमा ।

प्राधान्येन तुल्यधर्मोपन्यासस्तुल्ययोगिता । यथा[37]—

निस्यन्दतारकमुदञ्चितकेशपाशमापाण्डुरद्युति पराङ्मुखचित्रवृत्ति ।
कुञ्जे गिरौ विचरतः शशिशेखरस्य केनापि नापि विदितो विरहो रहो वा ॥

इवाव्ययप्रत्ययप्रतिपक्षादिशब्दा उपमावाचकाः । विषयदेशकालवैचित्र्यादुपमानानामानन्त्यम् ।
यद्यपि लुप्तोपमैव रूपकं तथापि सम्प्रदायानुरोधादुच्यते । तिरोभूतभेदोपमा रूपकम् । तच्च पूर्णमपूर्णं[38] च ।
पूर्णं यथा—

कर्णधारः स्मरो देवः सन्ध्या नौरम्बरं रजः ॥
विक्षेपणी विधोर्लेखा काचिदेवा विराजते ॥

मुखकमलमित्यादावपूर्णरूपकम् । तदपि द्विविधं समस्तमसमस्तं च । क्रमेणोदाहरणे तातचरणानाम्[39]—

नाभिह्रदात्कामगजेन [40]हर्तुं स्तनारविन्दे प्रहितः करो [41]यः ।
विलोलसारङ्गविलोचनायाः स एव रोमावलितामयासीत् ॥
अन्ध[42]कारनिकरं तृणाङ्कुरं स्वादयन्समधिकं तृषाकुलः ।
चन्द्रकान्तिचयमम्बुधोरणीमाजहार तरणेस्तुरङ्गमः ॥

मालारूपकं यथा—

निर्वेदः सरसीरुहस्य तिमिरस्तोमस्य होमस्थलं
सिद्धान्तः कुसुमायुधस्य सुदृशां कोपस्य काशीपदम् ।
प्रव्रज्या कुमुद[43]द्रुमस्य कुलटावाटस्य पाटच्चरः
पूर्वाद्रेरुदियाय वि[44]भ्रमवणिग्देवः क्षपाकामुकः ॥

रूपकमरूपकं [45]च श्लिष्टरूपकम् । यथा—

भ्रमरहितो नवसूनः कल्पतरुर्जयति राजेन्द्रः ।
परिचितसत्त्वशाखः फलति न यदि नाम किं कुर्मः ॥

रूप्यरूपकान्यतरविरहाल्लुप्तरूपकम् । यथा—

धत्ते मुदं चकोरस्य किरत्यमृतधोरणीम् ।
कुरुते कौमुदीवृष्टिमास्यमस्या मृगीदृशः ॥

आस्यमित्यत्र रू[46]पकव्यतिरेकात् कौमुदीत्यत्र रू[47]प्यव्यतिरेकात् । मु[48]खचन्द्रमित्यत्र शक्तिः । वृत्तिरत्र लक्षणेति विशेषः । तेनात्र लक्षणया रूप्यरूपकयोरुपस्थितिः । न चेयमुपमा भेदस्य तिरोभूतत्वात् । एतच्च विशेष्यनिष्ठं विशेषणनिष्ठं लुप्तसादृश्यमलुप्तसादृश्यं व्य[49]स्तसमस्तावयवावयविविरोधहेतुप्रभृतिभिर्विशेषैरस्याप्यानन्त्यमिति ।

उपमैवान्यथाभानरूपोत्प्रेक्षा । वाचकसादृश्यं विनापि तस्या अनुदयात् । न हि मशी-क्षोदः क्षीरत्वेनोत्प्रेक्ष्यते । तथापि सम्प्रदायानुरोधात् पृथगुच्यते । शक्त्युपस्थितस्यान्यस्यैककोटिकमन्यथाभानमुत्प्रेक्षा । ' इन्दाविन्दीवरद्वन्द्वम् ' इत्यादावतिव्याप्तिवारणाय शक्त्युपस्थितेति । संशयालङ्कारेऽतिव्याप्तिवारणायैककोटिकमिति । सा च विधिमुखी रूपकमुखी व्याजमुखी चेति । एताश्च विशेष्यप्रधाना विशेषणप्रधाना विशिष्टप्रधानाश्चेति । क्रमेणोदाहरणानि—

हरिणं हन्त धावन्तमनुधावन्ति वाजिनः ।
नाभिनिर्मुक्तकस्तूरीलुब्धा इव समीरणाः ॥

निद्राणे जगदीश्वरे जलनिधौ पाथोधरस्तस्करः
संसारायतनं प्रविश्य चकितं व्यालोक्य विद्युद्दृशौ ।
इन्दुस्फाटिकभाण्डमण्डलमिदं मार्तण्डकार्तस्वरं
ताराशौक्तिकमौक्तिकावलिमसौ हर्तुं किमाकाङ्क्षति ॥

रा[50]मक्षोणिपतेः प्रतापदहनज्वालाभिरावर्जिते
दुग्धाब्धौ सहसा सुधांशुमहसा तक्राम्भसा दूषिते ।
एते मौक्तिकशङ्खशुक्तिशफरीडिण्डीरखण्डच्छला—
वामिक्षानिकराः [ क्वचित् ] क्वचिदपि भ्राजन्ति भव्यश्रियः ॥

पूर्णोत्प्रेक्षा यथा—

विद्युद्दण्डः शतमखधनुःखण्डकाषायवस्त्रः
श्रीपादोऽयं नवजलधरः संचरन् दिक्षु दिक्षु ।
भिक्षामन्त्रस्तनितनिनदः स्नानतोयार्द्रमूर्तिर्
भानोर्बिम्बं तुहिनकिरणं भैक्ष्यमङ्गीकरोति ॥

पू[52]र्णता स्थलनिर्वाहः ।

खण्डोत्प्रेक्षा यथा—

युष्मत्प्रतापदहनज्वालाजालस्पृशो नभसः ।
स्फोटविकाराः स्फाराः शिव शिव तारामिषेण जायन्ते ॥

मालोत्प्रेक्षा यथा—

लावण्यद्रवलालिता इव कै[53]लाक्रोडप्रविष्टा इव
द्राक्षाकुक्षिसमुत्थिता इव सुधावीचीविचित्रा इव ।
माध्वीकप्रतिबोधिता[54] इव हरौ चेलाञ्चलं कर्षति
व्रीडालोलदृशः पयोधिदुहितुर्वाचः प्रसीदन्तु वः ॥

लुप्तोत्प्रेक्षा यथा—

अम्बरमणिरुचिभीतेरम्बरमपहाय मारुते प्रसृते ।
छाया ह्रिया[55]वतस्थे प्रणतमुखी वामनीभूय[56] ॥

अत्र वाचकविरहः । एवं कर्तृकर्मकरणतादर्थ्यहेतुसम्बन्धाधारवचनसमयदेशादिभेदादुत्प्रेक्षाणामानन्त्यम्[57] । यद्यपि निषेधमुखं रूपकं निषेधमुख्युत्प्रेक्षा वापह्नुतिस्तथापि पृथगुच्यते । उपस्थितं निषिध्य परस्य स्थापनम-

पहुतिः । यथा—

प्रियसखि सुधांशुवर्ती नायं पङ्कः कलङ्को वा ।
सिंहासनोपविष्टो जलधरकान्तिः कृतान्तोऽसौ ॥

आवृत्तिस्त्रिधा अर्थावृत्तिः पदा[58]वृत्तिरुभयावृत्तिश्च । आद्यो यथा—

सु[59]धार्घ्येणार्चितः कृष्णः शिवो वा पूजितस्त्वया ।
सुशीलं च सुधारूपं सुधा वा कथमन्यथा ॥
क[60]पाली कुरुते गानं तनुते नृत्यमात्मभूः ।
मनो नटति कृष्णस्य नटत्येवं[61] च मन्मथः ।

एवमुभयावृत्तिरवगन्तव्या । पदावृत्तिः शब्दालङ्कार इति वेदितव्यम् । सत्यपि हेतौ कार्यानुत्पत्तिर्विशेषोक्तिः । यथा–

ऊरू रम्भा दृगपि कमलं शैवलं केशपाशो
  वक्त्रं चन्द्रो लपितममृतं मध्यदेशो मृणालम् ।
नाभिः कूपो वलिरपि सरित्पल्लवः किञ्च पाणिर्[62]
  य[63]स्याः सा चेदुरसि न कथं हन्त तापस्य शान्तिः ॥

प्रस्तुतस्य वस्तुनो वस्त्वन्तरेण समर्थनमर्थान्तरम् । तच्च साधर्म्यवैधर्म्याभ्याम् किन्तु सामान्यस्य विशेषेण विशेषस्य सामान्येन समर्थनमिति शेषः । यथा—

न द्विजातिपथं मुञ्च विमुञ्च जनकात्मजाम् ।
पुंसामानिष्टमाचष्टे यत् स्वभावविपर्ययः ॥
गुणो दोषाय दोषोऽपि गुणाय भवति क्वचित् ।
श्रीखण्डः खण्ड्यते नित्यमेरण्डः सुखमेधते ॥

उत्कर्षापकर्षहेत्वोरनुक्तिरुपमानादुपमेयस्योत्कर्षो वा व्यतिरेकः । क्रमेणोदाहरणे—

तनुस्तव विनिर्जित्य हेमकेतकमञ्जरीम् ।
तनुते विजयस्तम्भमालि रोमालिकैतवात् ॥

जयहेतुरनुक्तः ।

गरीयसा दानगुणेन राजंस्त्वं गीयसे स्पर्शमणेः समानः ।
अचिन्तितं किन्तु भवान्ददाति चिन्तामणिश्चिन्तितमेव दत्ते ॥

श्लिष्टव्यतिरेको यथा—

एष सुदर्शनशीलनशीलजुषोर्वासुदेवयोर्भेदः ।
कौस्तुभमणिः परस्मिंश्चिन्तामणिरस्य वक्षसि स्फुरति ॥

हेतुं विना कार्योत्पत्तिर्विभावना । [ यथा ]—

अपाशबन्धो यु[65]वमानसानामवर्णमन्त्रः स्मरमोहनानाम् ।
अदेहदर्पः कुसुमायुधस्य वयो विरेजे नवनीरजाक्ष्याः ॥

भवाक्संज्ञा सूक्ष्मम्[66] । यथा—

भ्रू[67]संज्ञया प्रिये केलिसमयं प्रष्टुमिच्छति ।
सुदती रुदती चक्री लिलेखागारभित्तिषु ॥

क्रमो यथा—

त्रिपुरमुरभिदोराभिन्नमङ्कं विधृतवतो रुचिवीततल्पहेतोः ।
प्रसरति गिरिराजसिन्धुपुत्र्योः भुजगपतिग्रहणे मिथो विवादः ॥

अभिप्रेतवस्तुनः समानवस्त्वन्तरेणाभिधानं समासोक्तिः । एकाभिधाने द्वयोरभिधानमिति समासः । यथा—

अपहाय सुवर्णकेतकीं भ्रमर प्रास्थितमेव चेत् त्वया ।
न वपुर्न वयो न वा गुणः पुरुषं रोद्धुमपि प्रवर्तते ॥

कार्यकारणयोर्वैयधिकरण्यमसङ्गतिः । वैयधिकरण्यं कालिकं दैशिकं च । यथा—

स्नातं वारिषु निर्मलेषु जटिलो जातः पुनः कुन्तलो
मालिन्यं वपुषो निरस्तमखिलं कण्ठे पुनः कालिमा ।
कल्लोला बहला बलात्परिचिताः कान्ता तनुर्भस्मना
मातः श्रीमणिकर्णि कर्णपरुषं जल्पामि कोऽयं क्रमः ॥

हेतुर्द्विविधः कारको ज्ञापकश्च । वस्तुतस्तु हेतोरलङ्कारत्वे सम्प्रदानादीनामलङ्कारतापत्तिः । उत्कर्षविशेषस्य शोभाकरत्वमुभयत्रापि समानमिति । कारको यथा—

पिशुनपरिचिता पुरी पुरस्ताद्गुरुजनदृष्टिदुरुत्तरा दिगन्ताः ।
जनयति पुलकाङ्कुरान्कपोले नयनपथं समुपागतो मुकुन्दः ॥

ज्ञापको यथा—

हारेणोच्छ्वसितो कुचाङ्कुरसमारम्भो हृदि व्यज्यते
मञ्जीरस्य रणत्कृतेन मृदुना मन्दा गतिर्मीयते ।
किञ्चित्कञ्चुकभङ्गिभिर्भवरतनोरस्या वलिर्व्यज्यते
जेतुं विश्वमितः फलिष्यति मनोराज्यं मनोजन्मनः ॥

लोकसीमामपेक्ष्य विशेषव्यवस्थातिशयः । स च द्रव्यगुणकर्मनिष्ठः । तत्रापि लौकिकनिष्ठः प्रच्छादननिष्ठो दैवनिष्ठश्च । क्रमेणोदाहरणानि—

अन्धकारिणि लतागृहोदरे व्याजमौनमवलम्ब्य संचरन् ।
राधया मदनतीव्रबाधया मूर्छितेन पुनरीक्षितो हरिः ॥

अयि पङ्केरुहनयने कृतमकृतं वा मयानुचितम् ।
उदयति किमिति न चन्द्रो न ह्यपराधश्चकोरस्य ॥

रामे ब्राह्मणवेशधारिणि धनुर्धृत्वा कराम्भोरुहे
शिञ्जायां गुटिकाक्रमारचयितुं कैलासमाकर्षति ।
तात त्राहि सुत प्रयाहि दयिते निर्याहि सौधाद् बहिर्
वारं वारमयं पुरान्तकपुरक्षोभः शिवायास्तु वः ॥

विनोक्तिर्यथा—

न सभा कविना विना न वा कलहंसेन विना तरङ्गिणी ।
समुदञ्चति माधुरी न वा कलकण्ठेन विना वनस्थली ॥

सहोक्तिर्यथा—

मनो मनोराज्यशतेन नाकिनां रिपोरुपोढव्यथया सहोदितम् ।
पितुः प्रमादेन मदेन गोत्रिणां सरोजनेत्रा समधत्त दोहदम् ॥

एतयोरलङ्कारत्व उपसर्गोक्तिरप्यलङ्कारः स्यात् । उभयत्रापि शोभाकरत्वं समानमिति ।
व्याजमुखी व्याजस्तुतिः । निन्दामुखी निन्दास्तुतिः ।

उभयमपि यथा—

अहमपगतवैभवस्त्वमीशः पुरहर तेन मया निषेवितोऽसि ।
वसनमपगतं कचो जटालः प्रसरति भस्म तनौ किमाचरामि ॥

श्रुतिव्यतिक्रमक्रीडाचलं तव दृगञ्चलम् ।
अपहृत्य मनोऽस्माकमद्यापि न विमुञ्चति ॥

एकस्य कार्यस्य विविधकारणोपन्यास एकस्मिन् कारणे नानाकार्योपन्यासो वा समुच्चयः । आद्यो[८२] यथा—

रेखा काञ्चनकज्जलस्य नयनाम्भोजे मिथः कौशला-
दालीभिः सरलीकृतापि कुटिलीभावं समालम्बते ।
लक्ष्मीं वक्षसि पाणिपद्मविषयस्पर्शोदयादुन्नतिर्
जानीमो वयमेणशावनयने बाल्यं न पाल्यं तव ॥

एकस्या यौवनाभिव्यक्तेर्नाना कारणम् । द्वितीयं यथा—

अवगत्य कोकिलरुतं निभृतं हरिणा कृतं हरिणशावदृशः ।
चकितं दृशा पुलकितं वपुषा शिरसा नतं विकासितं मनसा ॥

एकस्य कोकिलरुतस्य विविधकार्योपन्यासः ।

उतं उत्तमं तदात्तं चेत्युदात्तं समृद्धिः । यथा—

वास्तूकस्य दलेशयेन गमिता येन क्षपा शारदी
तस्य श्रीफलपल्लवैरभिनवैरभ्यर्चितः[८३] पार्वतीम् ।
बालैः कीर्णमितस्ततो मरकतस्तोमं गृहप्राङ्गणे
दूर्वाकाण्डकलापमुग्धमनसो जिघ्रन्ति केलीमृगाः ॥

आशयप्रकर्ष इति केचित्[८४] । यथा—

भरतेन भुजादुर्वी हसता प्रतिपादिता ।
नताननेन रामेण नीता नीतिर्बलैर्गता ॥

तदसत् । उदारगुणेऽतिव्याप्तेः । न हि गुणस्यालङ्कारत्वं लक्षणभेदात् । बहूनामेकत्र क्रमेण समावेशः पर्यायः । यथा—

सूत्रं तस्याः समजनि वयो भाषितं तत्र भाष्यं
तस्मिंश्चेतोविलसितमिदं वार्तिकं तर्कयामः ।
टीका शङ्के पुनरुदयते तत्र नेत्रान्तपातस्
तस्मिञ्जातः कुवलयदृशो बाहुपाशो निबन्धः ॥

वयसि सर्वेषां समावेशः ।

एकस्य बहुषु क्रमशो निवेशो वा पर्यायः । यथा तातचरणानाम्—

मन्येऽरण्ये कुलगिरिगुहागह्वरे पर्यटन्ती
विद्धा दर्भैः किमपि चरणे वासुदेवस्य कीर्तिः ।
इन्दौ कुन्दे कमलमुकुले चामरे चन्दने वा
दत्त्वा दत्त्वा मृदुनि पुरतः पादमेषा प्रयाति ॥

प्रस्तुतस्य भङ्ग्यन्तरेणाभिधानं पर्यायोक्तिः । [ यथा ]—

कर्पूरपूरोपमकान्तिवृन्दे चन्द्रे समुन्मीलति राधिकायाः ।
कायस्य कम्पस्य बभूव मैत्र्यं मानस्य चित्तस्य च वैरमासीत् ॥

मानभङ्गो भङ्ग्यन्तरेणोक्तः ।

अविरुद्धयोर्विरुद्धयोरिव भानं विरोधाभासः । स च द्रव्यगुणक्रियानिष्ठः । न च 'चन्दनं दहन' इत्यत्रातिव्याप्तिः । तस्य विरुद्धरूपकत्वात् ।

जगद्विजयविख्यातचापटङ्कारकारिणि ।
अनङ्गोऽप्यङ्गवानद्य त्वयि दृष्टे विलोकितः ॥

भावरसपरिपोषो [100]रसवत् । यथा—

उद्वर्तितेव कनकैः स्नातेव द्युतिचयैस्तडिताम् ।
नीराजितेव केतककान्तिभिरवलोक्यते सुभ्रूः ॥

[101]एवं नवसु स्थायिभावेष्वेवं[102] गतव्यम् ।

उचितातिक्रान्तिरूर्जस्वि[103] । यथा—

अम्भोधिलङ्घनविलासविजृम्भमाण–
रोमाङ्करप्रथिततारकविभ्रमेण ।
लङ्कापुरं समुपगत्य निराकरोति
स्वेदोदबिन्दुपटलानि हसन् हनूमान् ॥

प्रस्तुतनिष्ठोऽप्रस्तुतप्रस्तावोऽप्रस्तुतस्तोत्रम् । न च समासोक्तावतिव्याप्तिः । तस्या अन्यापदेशमात्रविषयत्वात् ।

नायं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वरस्
तेनाहं विहिताञ्जलिर्यदुपते पृच्छामि सत्यं वद ।
ताम्बूलं कुसुमं पटीरमुदकं यद् बन्धुभिर्दीयते
स्यादत्रैव परत्र तत् किमु विषज्वालावलीदुःसहम् ॥

शास्त्रार्थप्रश्नोऽप्रस्तुतः प्रस्तुतो यात्राभङ्गः ।

अलसभुजलताभिर्नोद्धृतो नागरीभिर्
भवनदम(?)कानां नातिथिर्वा बभूव ।
त्वदरिनगरमध्ये संचरंश्चैत्रजन्मा
जरदजगरपीतः क्षीयते गन्धवाहः ॥

प्रस्तुता राजस्तुतिरप्रस्तुतो गन्धवाहः ॥

प्रीतिप्रकाशः प्रेयान् । यथा[१०४]—

धाम वारिधेः[१०५] श्याममन्ताश्चिन्तयतां सताम् ।
विलोचनपयोधारा मुक्ताहारायते हृदि ॥

साध्यसाधनोपन्यासोऽनुमानम् ।

राकाशीतकरः स्मरक्षितिपतेः पीयूषसारं सरः
प्रायस्तत्र निमज्ज्य रज्यति चिरं लावण्यवन्यद्विपः ।
एतास्तत्र कलङ्कहस्तकुहरक्षिप्ताम्भसां बिन्दवो
दृश्यन्ते शरकाण्डपाण्डिमचमत्कारत्विषस्तारकाः ॥

[१०६]पूर्वपूर्वस्योत्तरोत्तरस्य कार्यकारणभावः कारणमाला । यथा—

जनस्य विद्यैव मुखस्य भूषणं विवेकलेशोऽपि न विद्यया विना ।
विना विवेकं सुकृतं न जायते तपो विना न प्रभवन्ति सम्पदः ॥

विशेष्यगतविशेषणबाहुल्यं परिकरः। न च क्रियाविशेषणबाहुल्येऽव्याप्तिः। तस्यापि विशेष्यपर्यवसितत्वात्। यथा—

उत्पुलकिता कपोले खिन्ना कुचयोर्विलम्बिता[१०७] पदयोः ।
अलसायिता नयनयोः कस्य तपःश्रीः समायाति ॥

संगोपनवचोविन्यासो व्याजोक्तिः। न चार्थगुणे समाधावतिव्याप्तिः। अत्र वचस्तत्र क्रियेति भेदात्। यथा—

पुलकयति गण्डमण्डलमधरदलं किमपि कम्पयति ।
अलसयति देहमखिलं प्रियसखि हेमन्त[१०८]वारुणीवातः ॥

सदसद्विवेक[१०९]: परिसंख्या । सद्विवेको यथा—

एकं धाम घनश्याममितरत् कैरवद्युति ।
जानतो मम जायेत कदा हृदि सितासितम् ॥

असद्विवेको यथा—

द्वारि द्वारि मदोद्धतस्य गरलक्रूरं वचः शृण्वतः
श्रीगोविन्दपदारविन्दयुगल[११०]ध्यानं विना तिष्ठत[१११]: ।
अन्धस्येव सुधांशुसुन्दरमुखीलावण्य[११२]लीलायितं
किञ्चित्कार्यकरं न मे समभवन्मूढस्य विद्यार्जनम् ॥

सदसद्विवेको यथा—

दूरीकृत्य कृशोदरीमविरलक्रीडाकलाजित्वरीम्
ऊरीकृत्य निकुञ्जमेदुरदरीमीशस्य सेवां कुरु ।
नो चेन्मोहकपाटपाटनपटोः[११३] संसारकारागृहे
दुर्वारं भवतः करिष्यति सखे क्रुद्धो विधिर्बन्धनम् ॥

श्लेषमुखो यथा—

नृपतिमुकुटरत्नज्योतिरुद्योतिपादा-
म्बुज भवति धरित्री रक्षति क्षोणिपाले ।
कपटकलहकेलीलोलदोर्वल्लिभाजां
भवति कटकभङ्गः केवलं कामिनीनाम् ॥

उत्तरोत्तरमुत्तमं सारम् । यथा—

संसारसारमबला तस्याः सारं घनाश्लेषः ।
तस्यापि सारमम्बरविरहितवक्षोरुहस्पर्शः ॥

ननूत्तरोत्तरापकर्षादसारमप्यलङ्कारं स्यादिति चेत् । न । तेष्वपि[114] सारपर्यवसितत्वात् ।

प्रकृतविपरीतकारणान्तरोपानिपातः समाधिः । न च हेत्वलङ्कारेऽतिव्याप्तिः । तत्र प्रकृतानुकूलकारणान्तरोपनिपातात् यथा—

किं करोमि सखि केलिकातरे कुड्मलीकृतकरे[115] मुरद्विषि ।
कोपकुण्डलितकामकार्मुकज्योतिराविरभवत् कलानिधिः ॥

समानसङ्गतिः समः । सा चोत्कर्षापकर्षाभ्याम् । । उभयमपि यथा—

यद्वक्षः श्रीपतेः प्राप कौस्तुभस्तद्गुणोचितम्[116] ।
शम्भोः कण्ठं विषं लेभे गौरवं तत् पयोनिधेः ॥

विसदृशक्रियमसमम् । तच्च द्रव्यगुणक्रियानिष्ठम् । अस्य बहवो भेदाः ।

अयं जलधरश्यामो वामोरु तव कुन्तलः ।
दामव्याजेन कामस्य सूते कुन्दोज्वलं यशः ॥

त्वयि पश्यति सायकं नृपाले स्मितधाराधवलीकृतैरपाङ्गैः ।
त्वदरिक्षितिपालकामिनीनां हृदयं हन्त दहन्ति चन्द्रपादाः ॥

आधाराधेययोरन्यतराधिक्यमधिकम् । यथा—

यन्नाकाधिपतेर्गजस्य दशनस्याग्रं समुज्जृम्भते
[117]चान्द्री चञ्चति यत् कला प्रतिदिशं यद्योगिराड् भ्राम्यति ।
त्वत्कीर्तेः प्रतिवासरोन्नतिजुषः स्थानं कुतः स्यादिति
ब्रह्माण्डं[118] खनतो विधेस्तदखिलं प्रायः [119]स्फुरीस्फूर्जति ॥

अनाकलितकार्योत्पत्तिरुन्मीलितम् । यथा तातचरणानाम्—

प्रियसखि निखिलेऽपि क्रीडिते बाल्यसंधौ[120]
समसमयमुदास्ते दुर्विनीतोऽन्तरात्मा ।
अपि च पुलकपाली काचिदालीजनाना-
मपि करतलसङ्गादङ्गमालिङ्गतीव ॥

भङ्गिभिरुपमानप्रतिक्षेपः प्रतीपम् । यथा[121]—

जानीमस्तव केशपाशरचनाश्यामायमानः करः
क्वापि क्वापि चकोरचारुनयने यः प्रोञ्छि चेतोभुवा ।
तेनाजायत षट्पदस्य पटली पाथोमुचः कन्दली-
ध्वान्तस्य प्रसरः कलापिनिकरः शैवालजालाङ्कुरः ॥

संस्कारजन्यं ज्ञानं स्मृतिः । संस्कारोद्बोधकं क्वचिददृष्टं क्वचित्सादृश्यम् । स्मृतिरमुषिततत्तांशा मुषिते[122]तत्तांशा च । सादृश्यं यथा—

अकाण्डनिक्षिप्तनिशातकाण्डमरातिकोदण्डमुदीक्ष्य कश्चित् ।
स्मरन् प्रकोपभ्रुकुटीं प्रियाया त्रासावरुद्धः सहसावतस्थे ॥

अमुषिततत्तांशा यथा—

स्खलद्वाचः साचिस्मितसुभगवक्त्राम्बुजरुचः
कुचाभोगं प्रान्तच्युतवसनमुत्पश्यति मयि ।
स्मरामो वामाक्ष्याः किमपि तदनङ्गव्यवसितै-
रपाङ्गैः[123] संजातप्रसवमिव कर्णोत्पलयुगम् ॥

मुषिततत्तांशा यथा—

विपुलश्रम[124]वारिविप्रुषः श्लथदोर्बन्धनबन्धुरात्विषः ।
सुदृशः परिशीलये कदा कलशाकारमनावृतं महः ॥

तत्त्वेनानुपस्थितेनान्यथाभानं भ्रान्तिः । न चोत्प्रेक्षायामपह्नुतौ वातिव्याप्तिः । तत्र[125] तत्त्वेनोपस्थितेः । यथा—

कुञ्जोदरे वा धरणीधरे वा न बभ्रमुः कुत्र चिरं कुरङ्गाः ।
विशश्रमुः किन्तु न भुग्नकायाश्छायासु जालावलिविभ्रमेण ॥

विरुद्धनानाकोटिकं ज्ञानं संशयः[126] ।

किं स्मितं किमु दृक्पातं करोमि विधिवञ्चिता ।
नन्द[127]नालस्तमालो वा सखि कुञ्जे न संशयः ॥

अनुल्लिखितकोटिकं ज्ञानमनध्यवसायः । संशये भ्रमे वा कोटेरुल्लेखात् । यथा—

गण्डमण्डलविलोलकुण्डलैः[128] श्यामतामरसदामदीधितिः ।
कोऽयमालि वनमालिरागतः स्वेदशालि वपुरातनोति मे ॥

पूर्वपूर्वमुपात्तस्य विशेषणस्योत्तरोत्तरं[129] विशेष्यत्वेनोपादान[130]मेकावली । इयं च शब्दालङ्कारो भवितुमर्हति तदर्थप्रतिपादकशब्दान्तरासहनात्[131] । सा च विधिनिषेधाभ्याम् । यथा[132]—

सैषा पुरी क्रोडशयालुगङ्गा गङ्गा पुरारातिशिरोविभूषा ।
भूषा न केषां कृतदेहशोभा शोभा वधूनां मुदमातनोति ॥

न तन्मुखं यत्र कृपास्फुरद्वचो न तद्वचो यत्समुपेक्षितत्रपम् ।
त्रपा न सा[133] या च्युतबान्धवस्पृहा स्पृहा न सा या न हरौ प्रवर्तते ॥

समानानां भावः सामान्यम् । भाव ऐकात्म्यम् । नातिशयेऽतिव्याप्तिः । तत्रातिसाम्यमत्र तादात्म्यमिति भेदात् । यथा—

रामचन्द्र तव कीर्तितेजसा भूयसा तुहिनभासि निह्नुते ।
केलिकौतुककलाविमोहिनी रोहिणी प्रतिदिशं निरीक्षते ॥

सामान्यकारणानन्तर्भूतात् कारणात् कार्यविशेषो विशेषः । न च विभावनायामतिव्याप्तिः । तत्र कारणं विना कार्योत्पत्तिरत्र[134] तु सामान्यकारणं विना कार्योत्पत्तिरिति भेदात् । यथा[135]—

आस्यं विवर्जितवनं समुदस्तरागो[136] बिम्बाधरः प्रतिहताञ्जनमक्षियुग्मम् ।
भालं निरस्ततिलकं [137]सरसं व्रजन्त्याः कान्तिः परन्तु जगदेव वशीकरोति[138] ॥

काव्यं लिङ्गं यत्र तत् काव्यलिङ्गम् । काव्यं वाक्यपदार्थौ । तथा च क्वचिद्वाक्यार्थः क्वचित्पदार्थः । पदार्थोऽप्येकोऽनेकश्च । वाक्यार्थ[139]लिङ्गं यथा—

लोकानां विरहज्वरव्यतिकरे धत्से घनां वेदना-
मेषा ते प्रकृतिः शशाङ्क विदिता तेनाहमभ्यर्थये ।
धाम ध्यातवतस्तुषारधवलं मौलौ जटाले वसन्
विश्लिष्टस्य भवप्रिया न भगवन् सन्तापमन्तवह ॥

[140]सन्तापकरत्वे वाक्यार्थो लिङ्गम् । एकपदार्थलिङ्गं यथा—

श्रोतुं यशस्ते सुरगीयमानं गृहे गृहे भ्राम्यति भोगिराजे ।
वीतोपवीतो विधिवद्विधातुं तमांसि[141] नाचामति चन्द्रचूडः ॥

अनाचमने वीतोपवीतत्वं लिङ्गम् । अनेक[142]पदार्थलिङ्गं यथा—

बाल्ये ज्ञानविपर्ययस्तनुभृतां शक्तिच्युतिर्वार्धके
कान्तं यौवनमर्धकं रजनिभिः कालः कियांस्तिष्ठति ।
यद्यस्मिन्नपि पुत्रलालनसुहृत्संलापकान्तारति-
द्रव्योपार्जनभूपतिप्रणतयो विष्णोः कदा संस्मृतिः ॥

विष्णोः सेवाविरहे पुत्रलालनादीनां हेतुता ।

यदपायकरणं तदेवोपाय[143]करणं व्याघातः । न च विरोध[144]साङ्कर्यम् । अत्र ध्वंसोत्पादौ तत्र विरुद्धानां संसर्ग इति भेदात् ।

तव दृष्टिस्तनोत्येषा तापं तरललोचने ।
दृष्टिरेव पुनः शैत्यमुपार्जयति चेतसः ॥

विरुद्धानामेकत्र संसर्गो विरोधः । तत्राविरुद्धयोर्विरुद्धयोरिव भानम् । अत्र विरुद्धत्वेनैव विरुद्धानामिति विरोधाभासाद्भेदः । [145]अस्य बहवो भेदाः । यथा—

चक्रवाककलानाथचञ्चरीकपयोमुचः ।
[146]अमात्या इव कामस्य सेवायै समुपागताः ॥

[147]एकत्र चक्रवाकादीनां संसर्गः ।

भाविकं भावस्तात्पर्यम् । अयं प्रबन्धनिष्ठो गुणः । आरम्भादन्त्यावधि तात्पर्यनिर्वाहः । यथा माघे शिशुपालवधः ।

आत्मीयवस्तुदानपूर्वकं परकीयवस्त्वादानं परिवृत्तम् । यद्यप्याशयप्रकर्ष एवायमन्यथा सर्वस्वदानादावतिदानस्याप्यलङ्कारत्वं स्यादिति । यथा—

एक एवार्पितो बाणस्त्वया प्रत्यर्थिभूपतौ ।
पञ्च प्रत्यर्पितास्तेन प्राणास्त्वयि महीपते ॥

परस्परमुत्कर्षजननमन्योन्यम् । उत्कर्ष इत्युपलक्षणम् । वैरस्पर्धादयोऽप्यवगन्तव्याः । यथा[१४८]—

कंसारिकमलाकान्तकृष्णकैटभवैरिणाम् ।
अर्थस्य भूषणं शब्दः शब्दस्यार्थो[१४९] विभूषणम् ॥

प्रश्नानुमापकं प्रत्युत्तरमुत्तरम् । न चेदमनुमानम् । पक्षधर्मादीनामभावात् । न चैवं प्रश्नानुमापकक्रियायां क्रियालङ्कारः स्यादिति वाच्यम् । तस्याः सूक्ष्मालङ्कारत्वात्[१५०] । यथा—

प्रविचलदलिकुलसङ्कुलबकुलदलामोद[१५१]मेदुरप्रान्तम् ।
दरविकचहेमकेतकपुञ्जं दूती निकुञ्जमस्तौषीत् ॥

सा कुत्रास्तीति पृच्छमानं[१५२] पुरुषं प्रति दूतीवचनमिदम्[१५३] ।

सूक्ष्मं क्रियानिष्ठमुत्तरनिष्ठं वा[१५४] । अव्यक्तचेष्टाया एव सूक्ष्मत्वात् । तदिदमपि सूक्ष्ममेवेति ।

सपक्षपक्षपातिवैपक्ष्यं प्रत्यनीकम् । यथा—

निर्जितोऽसि वदनेन सुभ्रुवस्तच्च मे हृदयमेत्य तिष्ठति ।
तेन निर्दहसि निर्दयं मनश्चन्द्र ते तदुचितं कलावताम् ।

[१५५]उपाधिगुणसंक्रमस्तद्गुणः । गुणासंक्रमोऽतद्गुणः । क्रमेणोदाहरणे—

चन्द्रकान्तभवनस्य कान्तिभिश्चन्द्रतां व्रजति चन्द्रदीधितिः ।
[१५६]यत्र केलिकुरुविन्दमन्दिरज्योतिषा पुनरुपैति सूर्यताम् ॥

वाडवेनापि यद् व्याप्तः शीत एव पयोनिधिः ।
[१५७]अङ्कनिःशङ्कसुप्तस्य महिमासौ मुरद्विषः ॥

शब्दस्य नानार्थता [१५८]भङ्गिः । श्लिष्टं शब्दालङ्कार इति ततो भेदः । यथा[१५९]—

कलावति करं बिभ्रत्यम्बरे लोकतारकम् ।
वारुणीसङ्गता सन्ध्या सहसा मानमत्यजत ॥

प्रस्तुतप्रतिक्षेप आक्षेपः । तस्य च[१६०] वृत्तो वर्तमानो वर्तिष्यमाणो विषयः । स च विधिमुखः संशयमुखः शान्तिमुखः करुणामुखश्चेत्यादयोऽनन्ता भेदाः । क्रमेणोदाहरणानि—

यात्रालग्नं तव स्वामिन् साधु साधु न संशयः ।
वनितायतने यत्र वर्तते मङ्गलोदयः ॥

विधिमुखेन वर्तमाना यात्राक्षिप्यते[१६१] । यथा तातचरणानाम्—

मदकलकृतान्तकासरखुरपुटनिर्धूतधूलिसङ्काशम् ।
केतकरजो निवार्यं यदि सखि कार्यं मम प्राणैः ॥

करुणामुखेनागामिकेतकसम्बन्धो निवार्यते ।

किमयं नवकोरकस्तमालः किमयं शीकर[१६२]शीतलः पयोदः ।
अहमालि परन्तु तर्कयामि स्मितधारा[१६३]कलिताननो मुरारिः ॥

संशयमुखेन विकल्प आक्षिप्यते ।

क्षोणीपर्यटनं श्रमाय विदुषां वादाय विद्यार्जिता
मानध्वंसनहेतवे परिचितास्ते ते धराधीश्वराः ।
विश्लेषाय सरोजसुन्दरदृशामास्ये कृता दृष्टयः
कुज्ञानेन मया प्रयागनगरे नाराधि नारायणः ॥

शान्तिमुखेनातीता क्रियाक्षिप्यते ।

अर्थोपकारको दीपकः । स च द्रव्यगुणक्रियानिष्ठः । यथैकः प्रदीपोऽनेकान्पदार्थान्प्रकाशयति तथैकं द्रव्यमेका गुण एका क्रियानेकार्थान्प्रकाशयति । गुणनिष्ठो यथा—

चरणे कटकं कर्णे कुण्डलं कङ्कणं करे ।
गौरं तव तनोः कान्त्या[164] स्पर्शादेवानुमीयते ॥

गौरत्वमेको गुणोऽनेकेः पदार्थाः ।

कारकः समस्तोऽसमस्तश्च । समस्तः समस्तानसमस्तोऽसमस्तान् दीपयतीति विशेषः । असमस्तदीपकं यथा—

मेखलीयति मेदिन्याः ककुभः कङ्कणीयति[165] ।
हयस्ते मण्डलीकुर्वञ्जगत्याः कुण्डलीयति ॥

एकं कारकमनेकाः क्रियाः ।

उषसि मुखचन्द्रवीक्षणयाचिनि मयि[166] सापि सुभ्रुवो जीयात् ।
अलसायमान[167]खञ्जनपरिषत्पाण्डित्यखण्डिनी[168] दृष्टिः ॥

एको[169] परिषदनेके समस्ताः पदार्थाः ।

उत्तरोत्तरार्थस्य पूर्वपूर्वापेक्षा दीपकमाला ।

स्मरेण सुरभिस्तेन रसालस्तेन मञ्जरी ।
तया किमपि सौरभ्यं तेनासादि जगत्त्रयम्[170] ॥

क्रियोदाहरणमप्येतदेव ।

अङ्गाङ्गिभावापन्ननानालङ्कारस्थितिः सङ्करः । यथा—

भूयो भूयः स्फटिकघटितं केलिसङ्केतसौधं
दृष्ट्वा[171] दृष्ट्वा चकितचकितैः प्रेक्षितैः क्षौम[172]रोचिः ।
पश्चाद्[173]वृत्तं प्रियतममथ प्रेक्ष्य पश्चात्कृताक्षी
सारङ्गाक्षी विहसितमुखी यत्र शुभ्रीकरोति ॥

अत्र भ्रान्तिरलङ्कारस्तदङ्गतया[174] तद्गुणोऽलङ्कारः ।

अङ्गाङ्गिभावानापन्ना[175]नामलङ्काराणामवस्थितिः संसृष्टिः । यथा[176]—

उद्यत्केसरदण्डमण्डितशशिश्वेतातपत्रं वहन्
मायूरव्यजनायमानजलदश्रेणीं समीरः श्रयन् ।
लीलादारितदैत्यदर्पमुकुटभ्रान्त्या त्विषामीश्वरं
पश्यँल्लोलविलोचनो नरहरिर्देवः शिवायास्तु वः ॥

रूपकोपमाभ्रान्तिस्वभावविशेषो [ क्त्य ] लङ्काराः ।

अर्थालङ्कारेष्वर्थसंसृष्टिरिव शब्दलङ्कारेषु शब्दसंसृष्टिरवगन्तव्या । ननु शब्दालङ्कारेष्वर्थालङ्कारेषु चोभयसंसृष्टिरस्त्विति चेत् । न । अर्थालङ्कारस्य शब्दावृत्तित्वं शब्दालङ्कारस्य चार्थावृत्तित्वमिति नियमात् ।

यथा—

मैथिलीं त्यज तदग्रतः कुतः सैनिकं दशमुखे क्व वा भवान् ।
आगते दिनमणौ क्व तारका तारकाङ्कितरुचिः क्व चन्द्रमाः ॥

अत्रोक्तिच्छेकयमकालङ्काराः ।

समुदितार्थ-विशेषणक्रिय-उपसंहारोक्ति-तर्काः परेऽलङ्काराः ।

अव्ययाभ्यां समुदिताभ्यामेकार्थमुपस्थापितं तत् समुदितार्थम् । यथा—

कालः स एष हसितद्युतिभिः सुधांशोः
कोपं प्रकाशयति किं च रविप्रभाभिः ।
अद्यापि धीरतरनीरधराभिराम
किं नाम राम तव चेतसि नानुरागः ॥

अद्यापि किं नामेति समुदितार्थः ।

विशेष्यगतोऽर्थः क्रियाविशेषणीभूय यत्र भासते तद्विशेषणक्रियम् । यथा—

भिक्षाचारिणि कुञ्जचारिणि जटाजूटप्रसंचारिणि
त्वद्विद्वेषिणि पारगामिनि पुरारातिभ्रमे जाग्रति ।
तीव्रश्वासगति स्खलन्मति गलन्नेत्राम्बुधारातति
म्लायद्दीधिति सिन्धुरिन्दुमसकृद् गोपायितुं काङ्क्षति ॥

मुखे स्तुतिरुपसंहारे निन्दा मुखे निन्दोपसंहारे स्तुतिरुभयथाप्युपसंहारोक्तिः[८६] । यथा—

'जयति जलदलेखानिर्विशेषा तनुस्ते
दशनयुगमुदारस्तम्भगम्भीरकीर्ति ।
उभयमपि करीन्द्र व्यर्थमेव प्रतीमो
यदि भवति शिशूनामङ्कुशस्य प्रहारः ॥
नीराणि नक्रवडवानलदूषितानि
तीराणि दुस्तरतरङ्गदुरुत्तराणि ।
श्लाघ्यं किमस्यं जलधेर्यदि नैष सूनु —
राशाप्रसाधनकरो रजनीकरः स्यात् ।

औपपत्तिस्तर्कः ।

भूषाभरं सरोजाक्ष्या सहेत किमु वा पुनः ।
मुखाद् भूषाशशिप्रावस्यन्दसेको न चेद्भवेत् ॥

शुभाशंसाशीः । यथा तातचरणानाम्—

'मल्लीमाल्यधिया सुधाकरकलां कण्ठश्रियं कज्जल-
भ्रान्त्या भालविलोचनानलशिखां सिन्दूरपूराशया ।

कैलासप्रतिबिम्बिता स्ववपुषो गृह्णन् हसन्त्या मुहुः
पार्वत्याः परिकर्मकर्मणि चिरं मुग्धो हरः पातु नः ॥

समयदेशप्रकृतिप्रत्ययसर्वनामोपसर्गवचनप्रत्यभिज्ञानविशेषणविशेष्यक्रियोपमानरूपकोत्प्रेक्षावाक्यार्थपदार्थपदवर्णरीतिकाकुचेष्टाकेतव्यङ्ग्यप्रकरणादीनि अन्यानि चानन्तानि व्यञ्जकान्यूहनीयानि । उद्देश्यमखिलं व्यङ्ग्यमेव कर्तव्यम् । तस्य वाच्यत्वे काव्यस्याधमत्वापत्तिः ।

समयदेशव्यङ्ग्यं यथा—

निरालोकमिदं व्योम लोकशून्यं निकेतनम् ।
वीताशोकमिदं कुञ्जं कुतस्तरुणि ताम्यसि ॥

निरालोकेन निशा वीताशोकेन देशः । स्त्रीणामकालकलिकोद्गमतयाशोको वैरी ।

उपमानप्रत्यभिज्ञानप्रकृतिप्रत्ययसर्वनामवचनव्यङ्ग्यानि यथा—

दूति केयमनुनेतुमागता क्षालिता हिमकरत्विषा दिशः ।
सोऽयमिन्दुमुखि नन्दनन्दनः कुन्दकुञ्जमुपगत्य तिष्ठति ॥

दूतिका न तु दूत्य इति वचनव्यङ्ग्यम् । इयं नान्येति सर्वनामव्यङ्ग्यम् । आगता नागमिष्यति इति प्रत्ययव्यङ्ग्यम् । प्रत्यभिज्ञयावस्थाविशेषो व्यङ्ग्यः । तिष्ठतीति प्रकृत्या न स्थास्यतीति व्यङ्ग्यम् । इन्दूपमया[163] मुखस्याह्लादकरत्वं व्यङ्ग्यम् ।

रूपकव्यङ्ग्यं यथा—

तडित् कान्ता पयःसम्पद् गर्जितं गर्वजल्पितम् ।
संसारोऽयं पयोवाहः[164] किमतोऽपि विलम्बसे ॥

चापल्यमत्र व्यङ्ग्यम् । करपल्लव इत्यादौ च सौकुमार्यलौहित्यादिकं व्यङ्ग्यम् ।

उत्प्रेक्षाव्यङ्ग्यं यथा—

अरण्यहरिणग्राममाचक्राम हुताशनः ।
इन्दोः क्रोडमृगं धर्तुमिव धूमो[165] ययौ नभः ॥

हुताशनस्येव धूमस्य प्रागल्भ्यं व्यज्यते ।

विशेषणविशेष्यव्यङ्ग्यं यथा—

कौरवास्त्यजत गौरवं[166] यतो गौरवं[167] समिति वः प्रयास्यति ।
अग्रतो यदयमर्जुनाग्रजः पाणियोजितशरः समाययौ ॥

अर्जुनाग्रजेन विशेष्येण रिपुक्षयो व्यज्यते । [1]पाणियोजितशरेणेति विशेषणेन सामग्रीसान्निध्यं व्यज्यते ।

व्यङ्ग्यव्यङ्ग्यं यथा—

क्व सुधांशुः क्व चण्डांशुः क्व शक्रः क्व च दिग्गजः ।
हस्तन्यस्तगदो भीमो यदि शोणविलोचनः ॥

नयनशोणिम्ना कोपस्तेन च रिपुक्षयो व्यज्यते ।

उपसर्गव्यङ्ग्यं यथा—

उदयति मयि मानबन्धमन्तर्विदधति वामदृशः किमाचरामि ।
इति विहसति[101] शारदः सुधांशुर्विकसितकान्तिकलापकैतवेन ॥

अत्रोपसर्गाणामर्थविशेषो व्यङ्ग्यः ।

उपमानविशेषणव्यङ्ग्यं यथा—

स्वर्णदीसिन्धुसंसर्गखेलादिन्दीवरद्युति[103] ।
राधायाः क्रोडमायान्त्याः कदा पश्येम लोचनम् ॥

उपमानविशेषणेन उपमेयस्य विशेषो व्यज्यते ।

वैयर्थ्यार्थपदार्थवाक्यचेष्टाव्यङ्ग्यान्युदाहृतानि । कठोरवर्णेन वीरादिः सुकुमारेण शृङ्गारादिः गौड्या वीरादिर्वैदर्भ्यां शृङ्गारादिर्व्यज्यते ।

उक्तिव्यङ्ग्यं यथा--

विद्युद्वारिधरं विलोक्य किमिति त्रासाकुला वर्तते[106]
दूरादम्बरमाहरन्त्यविरतैर्नीरैर्मुहुः सिञ्चति ।
इत्थं गोपकुलं निरीक्ष्य सविधे लीलालतामण्डपे
राधामाधवयोरुदञ्चति मिथो वैदग्ध्यमुग्धं वचः ॥

पदव्यङ्ग्यं यथा--

प्रातर्विनिमयं वीक्ष्य मुक्ताहारभुजङ्गयोः ।
शिवौ शिवायै जगतामन्तर्विकसितस्मितौ ॥

शिवपदेन श्रेयोदातृत्वं व्यज्यते ।

प्राचां वचांसि विलसन्ति तथापि मातः
प्रीतिं सरस्वति मदीयकृतौ विदध्याः ।
रत्नानि यद्यपि जयन्ति तथापि कान्ता-
स्तालीदलं श्रवणभूषणमावहन्ति ॥

विबुधाः पद्यसूत्रेण गुम्फितालङ्कृतिर्मया ।
सूत्रभङ्गो यथा न स्यादेतस्याः कलयेत्तथा ॥

दण्डीयति यतो दण्डी वामनीयति वामनः ।
तदलङ्कारतिलकं धीराः कुर्वन्तु भूषणम् ॥

इति श्रीभानुदत्तविरचितेऽलङ्कारतिलकेऽर्थालङ्कारनिरूपणं नाम
पञ्चमः परिच्छेदः ॥

## VARIANT READINGS

### IV

१ शब्दालङ्काराः B; C adds निरूप्यन्ते. २ क्वचित् AC. ३ मुद्रोक्ति C. ४ Here B adds अतिरिक्ता. ५ °कारः B. ६ 'सा च' इत्यारभ्य 'न च वक्रोक्तिः' इत्यन्तं नास्ति A. ७ omitted B. ८ क्री AC. ९ क्री AC. १० A breaks with पद. ११ नयति C. १२ °रा° B. १३ °रोपपत्तेः C. १४ चातिव्याप्तेः C. १५ Omitted B. १६ Omitted C. १७ नव° C. १८ Omitted C. १९ समानवर्णा श्रुतिः C. २० ष्टा C. २१ तत्र C. २२ तात्पर्यम् C. २३ आवर्त B. २४ °योर्वर्णवृत्तौ C. २५ Omitted B. २६ नताङ्ग्याः C. २७ वृत्त्यनुप्रासः B. २८ °मिव C. २९ सिसृक्षा C. ३० ती C. ३१ Omitted C. ३२ विरहो जरयति C. ३३ Omitted C. ३४ °क° C. ३५ चिरं C; वीरं B. ३६ Omitted C. ३७ कामः C. ३८ कुतस्तु B. ३९ °बाण° C. ४० छेकनिष्ठस्वरानुप्रासो यथा तातचरणानाम् C. ४१ यत्र B. ४२ Omitted B. ४३ एवं C. ४४ °स इति° B. ४५ एव C. ४६ निखिले° C. ४७ च C. ४८ This whole expression omitted C. ४९ °पादनिष्ठं यमकं C. ५० 'मानवी' इत्यारभ्य 'द्विपादयमकं यथा' इत्यन्तं नास्ति C. ५१ सुदारुण C. ५२ °समान° C. ५३ तेजसा C. ५४ °नी B. ५५ °नी B. ५६ °वनं B. ५७ °वनं B. ५८ यमकस्य पदानियमक एवावगन्तव्यम् । अनुप्रासस्येव छेकवृत्तिमालायमकस्यापि छेकोपदर्शिता माला । एकाक्षरद्व्यक्षरादिवृत्तित्वं यथा— न सुजने यनेनेयनेनजले रविद्युतिविकस्वरपद्मलश्रियः। चुकुर एष कुतस्तव वर्ण्यतां स्मरकलापकलापकायजित् ॥' इत्यधिकं दृश्यते C. ५९ 'वचनलिङ्ग' इत्यादि 'समाशति' इत्यन्तं नास्ति C. ६० Omitted C. ६१ Omitted C. ६२ यथा B. ६३ °चण्डि° B. ६४ Omitted B. ६५ मातु° C. ६६ °मातनोति C. ६७ Omitted C. ६८ 'द्वितीये' इत्यारभ्य 'द्रव्ययोजना' इत्यन्तं नास्ति B. ६९ Omitted C. ७० °सूनु° C. ७१ °जे C. ७२ °रुक्ता C. ७३ आर्था° B. ७४ Omitted C. ७५ °णे C. ७६ Omitted C. ७७ °मपगतम् B. ७८ °निदानं C. ७९ ध्यायेद्रामनिधानं C. ८० भुवनं C. ८१ एवं प्रेक्ष्यमभिनेयं नाट्यालङ्कारे प्रयोजकम् । B. ८२ इति श्री. भा. क. मि. वि. लं. र. शब्दालङ्कारनिरूपणो नाम चतुर्थः । B.

### V

१ C adds आक्षेप after आवृत्ति. २ Omitted C. ३ From 'असङ्गति' upto 'सहोक्ति' Omitted C. ४ Omitted C. ५ C adds परिवृत्ति after व्याघात. ६ Omitted C. ७ Omitted C. ८ Omitted C. ९ Omitted C. १० त्यक्त C. ११ दिक्पा° C. १२ वी C. १३ B adds इति. १४ इयं पङ्क्तिः नास्ति C. १५ क्रीड° B. १६ यथा Omitted C. १७ °मथापश्यन्न° C. १८ चेदं C. १९ °पदा° C. २० क्षरे C. २१ यदि Omitted C. २२ गुणः C. २३ लक्ष्मी° C. २४ पंच C. २५ एकोपमाप्यवगन्तव्यम् C. २६ °वाचको° C. २७ °धेन C. २८ निरुच्यन्ते B. २९ °रोपमानभव C. ३० Omitted C. ३१ °दे° C. ३२ Omitted C. ३३ अथवा C. ३४ °च्छाति C. ३५ Omitted C' ३६ °धिकला B. ३७ Omitted B. ३८ चेति B. ३९ Omitted C. ४० गन्तुं C. ४१ करोदयः B. ४२ अवकार° C. ४३ कुसुम° C. ४४ विभ्रम B. ४५ Omitted B. ४६ °रूप्य° C. ४७ °रूपक° C. ४८ 'मुखचन्द्र' इत्यारभ्य 'रूपकयोरुपस्थितिः' इत्यन्तं नास्ति B. ४९ B adds here 'मुखचन्द्र इति विशेष्यनिष्ठं लुप्तसादृश्यत्वं नयनारविन्द इन्द्र इति विशेषणनिष्ठमलुप्तसादृश्यं'. ५० विद्युद्दशा BC. ५१ 'रामक्षोणिपतेः' इत्यारभ्य 'पूर्णोत्प्रेक्षा यथा' इत्यन्तं नास्ति B. ५२ B adds एषैव पूर्णोत्प्रेक्षा ; स्थलनिर्वाहः पूर्णता C. ५३ द्रवकलाक्रोड° C. ५४ °रोहिता C. ५५ क्रिया° B. ५६ °भवति B. ५७ B adds इति. ५८ Omitted B. ५९ एतत् पद्यं नास्ति B. ६० एतत् पद्यं नास्ति C. ६१ तटरत्येव B. ६२ तस्याः C. ६३ पाणिः C. ६४ क्वचित्सामान्यस्य विशेषेण क्वचिद्विशेषस्य सामान्येन समर्थनमिति विशेषः C. ६५ °न्धे B. ६६ °क्षमः B. ६७ हक्सं° C.

६८ °रिपो° C. ६९ भुजंगपरिग्रहगेपि को विवादः C. ७० समान omitted C. ७१ नं समासोक्तिः B. ७२ Omitted B. ७३ °दुष्ट° C. ७४ Omitted C. ७५ °तां B. ७६ °विंद्यते B. ७७ °सापेक्ष° C. ७८ °ह्रान्तरे C. ७९ °रीक्षते B. ८० यद्दिते B. ८१ निर्गच्छ B. ८२ Omitted C. ८३ °मुप° C. ८४ अपह्नन्ति C. ८५ विविधः B. ८६ Omitted C. ८७ °थं B. ८८ लक्ष्मी C. ८९ °विषयः C. °विषम° B. ९० उत B, उत्त C. ९१ वास्तकस्य C, वास्तु कस्य B. ९२ दशाशयेन B. ९३ °भ्यचितिः C. ९४ Omitted C. ९५ नीतिर्वेनागताम् C. ९६ Omitted C. ९७ प्रतिभानं B. ९८ °परिणामो C. ९९ Omitted B. १०० Omitted B. १०१ °ष्वेवाव° B. १०२ उपहता° C. १०३ °स्वी B. १०४ Omitted C. १०५ धार° C. १०६ पूर्वस्य पूर्वस्योत्तरस्योत्तरस्य B. १०७ विलिम्बिता B, विलम्बीता C. १०८ हेमत B, हेमत्त C. १०९ °द्विवारः C. ११० °युगुल° C. १११ सीदतः C. ११२ °वक्त्रेन्दु° B. ११३ °पटौ B. ११४ तस्याप्युदीच्यस्य B. ११५ कुण्डली° B. ११६ °पमः C. ११७ चान्द्रि° C, वान्द्रीचन्ति B. ११८ ब्रह्माण्डस्कवळतोस्तदळविप्रायस्कुरीस्कुर्यतम् C. ११९ स्युर्जेति B. १२० बन्धौ B. १२१ Omitted C. १२२ Omitted C. १२३ परागैः C. १२४ °भ्रम° B. १२५ तत्र तत्र B. १२६ °यालङ्कारः B. १२७ नट° B. १२८ °ल° B. १२९ उत्तरोत्तरं omitted C. १३० पुनरुपादानं C. १३१ °रानुपादानात् B. १३२ Omitted C. १३३ 'सा या' इत्यरभ्य 'भाव ऐ' इत्यन्तं नास्ति C. १३४ °त्तेः B. १३५ Omitted C. १३६ °वर्णो C. १३७ सरसो C. १३८ °तु B. १३९ Omitted C. १४० शिवात्मकत्वे वाक्यार्थो लिङ्ग एवार्थो लिङ्गं यथा C. १४१ तमांसि B. १४२ एतद् वाक्यं नास्ति C. १४३ तदर्थेनापायकरणं B. १४४ °धालङ्कार° B. १४५ एतद् वाक्यं नास्ति C. १४६ विरुद्धानां प्रियो योगो वियोगो मे कथं पुनः । C. १४७ एतद् वाक्यं नास्ति C. १४८ Omitted B. १४९ शद्बोऽर्थस्य C. १५० सूक्ष्मत्वात् C. १५१ °लता° C. १५२ समीहमानं C. १५३ दूतिकाया B. १५४ च C. १५५ °घेर्गुण° C. १५६ पत्र C. १५७ अङ्गनिःसङ्ग- C. १५८ शद्बभङ्गिः C. १५९ Omitted C. १६० Omitted C. १६१ निषिध्यते B. १६२ शीतल. शीकरः C. १६३ °धारालमुखाम्बुजो B. १६४ कान्त्याः B. १६५ कुण्डलीयति C. १६६ साचि C. १६७ °निद्राणनीलनीरजपरि° C. १६८ °शालिनी B. १६९ एतद् वाक्यं नास्ति C. १७० °यी B. १७१ दृष्ट्वा दृष्ट्वा C; B has only दृष्ट्वा. १७२ श्याम° C. १७३ प्रत्यावृत्तं C. १७४° द्रुणतया C. १७५ °वापन्ना° B. १७६ Omitted C. १७७ °दीरिव° B. १७८ °शुक्तमुकुट° C. १७९ स्वभावाख्यान° B. १८० °रुन्नेया B. १८१ 'शद्बालङ्कारे'' इत्यारभ्य 'शद्बावृत्तित्वं' इत्यन्तं नास्ति C. १८२ °खः B. १८३ तारकान्तिरुचिरः B. १८४ °कारिणि B. १८५ °जूटाटवीधारिणि B. १८६ °पसंहारः C. १८७ अजानि B. १८८ °मिदमु° C. १८९ °न्तिम् B. १९० किमस्ति C. १९१ This and the following two lines are omitted B. १९२ अस्य पदस्य स्थाने अपरं पद्यं दृश्यते यथा —'अये पांशुक्रीडा विरमति न तेऽद्यापि यदि वा मुखं वक्षो दिग्धं जघनमपि धूलीपरिकरैः । इति श्रुत्वा वचनमळलाधीशतया नमन्ती सव्रीडा हरभस्तिभव्यावतु जनान् । C. १९३ एतद् वाक्यं नास्ति C. १९४ °हा C. १९५ भूमेः B. १९६ कौ° B. १९७ कौ° C. १९८ एतद् वाक्यं नास्ति C. १९९ चण्डांशुः C. २०० शीतांशुः C. २०१ विहसितशारदः C. २०२ सर्वदा° B. २०३ °तिः C. २०४ Omitted B. २०५ अयं परिच्छेदो नास्ति C. २०६ °से C. २०७ °विरतौ C. २०८ शिवामजायेतां B. २०९ °देनस्य B. २१० कलसस्तु यथा C. २११ एतत् पद्यं नास्ति B. २१२ °भानुकरमिश्रविर° B.

ALPHABETICAL INDEX

of Illustrations in the

## अलङ्कारतिलक

*(The first three chapters of the work have been published in the last volume (Vol. 23) at pages 57-86 and the next two chapters in this volume at pages 93-116. The figures given in this Index refer to these pages).*